अपिच । सेवेव मानमखिलं ज्योत्स्नेव तमो जरेव लावण्यं ।
हरिहरकथेव दुरितं गुणशतमप्यर्थिता हरति ॥
इति विमृश्य तत् किमहं परपिण्डेनात्मानं पोषयामि ।
कष्टं भोस्तदपि द्वितीयं मृत्युद्वारं ।

यतः । पल्लवग्राहि पाण्डित्यं क्रयक्रीतं च मैथुनं ।
भोजनं च पराधीनं तिस्रः पुंसां विडम्बनाः ॥
अन्यच्च । रोगी चिरप्रवासी परान्नभोजी परावसथशायी ।
यज्जीवति तन्मरणं यन्मरणं सोऽस्य विश्रामः ॥
इत्यालोच्यापि लोभात् पुनरप्यर्थं ग्रहीतुं ग्रहमकरवं
तथा चोक्तं । लोभेन बुद्धिश्चलति लोभो जनयते तृषां ।
तृषार्तो दुःखमाप्नोति परत्रेह च मानवः ॥
ततोऽहं मंदं मंदमुपसर्पंस्तेन वीणाकर्णेन जर्जरवंशखंडेन ताडितश्चाचिंतयं
लुब्धो ह्यसंतुष्टो नियतमात्मद्रोही भवति ।

---

Moreover—

As slavery destroys all nobleness, as moonlight darkness, as old age loveliness,
As discourse of Hari and Hara sin—so does beggary destroy a hundred good qualities.

Thus considering, how then could I sustain myself on the cakes of another? Alas! that truly were a second door of death. For—

Learning gathered twig by twig, and pleasure gained by payment,
And food eaten by another's leave, are the three miseries of men.

And again—

The sick man, the man long an exile, the man who eats another's food, and sleeps in another's house,—
Such an one's life is a death, such an one's death is his rest.

And though I thus reflected, yet from avarice I again made an effort to get his food. As it is said—

Through avarice the reason totters, avarice produces insatiability;
The insatiable man tastes misery both here and hereafter.

Thereupon, as I was slowly approaching, I was struck by that Vinakarna with the bit of split bamboo, and I reflected—The soul and organs of the covetous and discontented are not kept in subjection.

तथा च । सर्वाः संपत्तयस्तस्य संतुष्टं यस्य मानसं ।
उपानद्गूढपादस्य सर्वा चर्मावृतेव भूः ॥
अपरं च । संतोषामृततृप्तानां यत्सुखं शांतचेतसां ।
कुतस्तद्धनलुब्धानामितश्चेतश्च धावतां ॥
किंच । तेनाधीतं श्रुतं तेन तेन सर्वमनुष्ठितं ।
येनाशाः पृष्ठतः कृत्वा नैराश्यमवलंबितं ॥
अपिच । असेवितेश्वरद्वारं अदृष्टविरहव्यथं ।
अनुक्तक्लीबवचनं धन्यं कस्यापि जीवनं ॥
यतः । न योजनशतं दूरं बाध्यमानस्य तृष्णया ।
संतुष्टस्य करप्राप्तेऽप्यर्थे भवति नादरः ॥
तदत्रावस्थोचितकार्यपरिच्छेदः श्रेयान् ।
उक्तंच । को धर्मो भूतदया किं सौख्यं नित्यमरोगिता जगति ।
जंतोः कः स्नेहः सद्भावः किं पांडित्यं परिच्छेदः ॥
तथाच । परिच्छेदो हि पांडित्यं यदापन्ना विपत्तयः ।
अपरिच्छेदकर्तॄणां विपदः स्युः पदे पदे ॥

---

So—

All fortunes are his whose mind is well content,
To him whose foot is inserted in a shoe is not the earth covered with leather?

Moreover—

The happiness of the quiet-minded who are filled with the nectar of contentment,
How can it be their's who run to and fro, lusting for wealth?

Again—

All has been read by him, all heard, all obeyed,
Who thrusts hope behind, and leans no more upon expectation.

Moreover—

Of him who has never waited at the great man's gate, or borne the pain of separation,
Or spoken words in vain, fortunate indeed has been the life.

For—

Four hundred miles is not far for the man who is impelled in mind by avarice,
While with the contented man there is no care for wealth held in the hand.

तथा हि । त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे स्वात्मार्थे पृथिवीं त्यजेत् ॥
अपरंच । पानीयं वा निरायासं स्वाद्वन्नं वा भयोत्तरं ।
विचार्य खलु पश्यामि तत् सुखं यत्र निर्वृतिः ॥
इत्यालोच्याहं निर्जनवनमागतः ।
यतः । वरं वनं व्याघ्रगजेंद्रसेवितं द्रुमालयः पत्रफलांबुभोजनं ।
तृणानि शय्या परिधानवल्कलं न बंधुमध्ये धनहीनजीवनं ॥
ततोऽस्मत् पुण्यवलोदयाद् अनेन मित्रेणाहं स्नेहानुवृत्त्या अनुगृहीतः अधुना पुण्यवलोदयात् भवदाश्रयः स्वर्गएव मया प्राप्तः ।
यतः । संसारविषवृक्षस्य द्वे एव रसवत् फले ।
काव्यामृतरसास्वादः संगमः सुजनैः सह ॥
मंथर उवाच ।

अर्थाः पादरजोपमा गिरिनदीवेगोपमं यौवनं ।
आयुष्यं जललोलबिंदुचपलं फेनोपमं जीवितं ॥
धर्मं यो न करोति निश्चितमतिः स्वर्गार्गलोद्घाटनं ।
पश्चात्तापयुतो जरापरिगतः शोकाग्निना दह्यते ॥
युष्माभिरतिसंचयः कृतस्तस्यायं दोषः ।
शृणु । उपार्जितानां वित्तानां त्याग एव हि रक्षणं ।
तडागोदरसंस्थानां परीवाह इवांभसां ॥
अन्यच्च । यदधोधः क्षितौ वित्तं निचखान मितं पचः ।
तदधो निलयं गंतुं चक्रे पंथानमग्रतः ॥
अन्यच्च । निजसौख्यं निरुंधानो यो धनार्जनमिच्छति ।
परार्थभारवाहीव क्लेशस्यैव हि भाजनं ॥

अपरं च । दानोपभोगहीनेन धनेन धनिनो यदि ।
भवामः किमु तेनैव धनेन धनिनो वयं ॥
अन्यच्च । असंभोगेन सामान्यं कृपणस्य धनं परैः ।
अस्येदमिति संबंधो हानौ दुःखेन गम्यते ॥
तथा चोक्तं । दानं प्रियवाक्सहितं ज्ञानमगर्वं क्षमान्वितं शौर्यं ।
वित्तं त्यागनियुक्तं दुर्लभमेतच्चतुष्टयं लोके ॥
उक्तं च । कर्तव्यः संचयो नित्यं कर्तव्यो नातिसंचयः ।
पश्य संचयशीलोऽसौ धनुषा जंबुको हतः ॥

तावाहतुः कथमेतत् । मंथरः कथयति, अस्ति कल्याणकटके वास्तव्यो भैरवो नाम्ना व्याधः स चैकदा मृगमन्विष्यन् विंध्याटवीं गतवान्; ततस्तेन व्यापादितं मृगमादाय गच्छता घोराकृतिः शूकरो दृष्टः तेन व्याधेन मृगं भूमौ निधाय शूकरः शरेणाहतः । शूकरेणापि घनघोरगर्जनं कृत्वा व्याधो हतः; व्याधः छिन्नद्रुम इव भूमौ निपपात ।

यतः । जलमग्निर्विषं शस्त्रं क्षुद्व्याधिः पतनं गिरेः ।
निमित्तं किंचिदासाद्य देही प्राणान् विमुंचति ॥

अथ तयोः पादास्फालनेन सर्पोपि मृतः । अथानंतरं दीर्घरवो नाम जंबुकः परिभ्रमन्नाहारार्थी तान् मृतान् मृगव्याधसर्पशूकरान् अपश्यत् अचिंतयच्च अहो अद्य महत् भोज्यं मे समुपस्थितं ।

अथवा । अचिंतितानि दुःखानि यथैवायांति देहिनां ।
सुखान्यपि तथा मन्ये दैवमत्रातिरिच्यते ॥
तद्भवतु, एषां मांसै मासत्रयं मे सुखेन गमिष्यति ।
उक्तं च । मासमेकं नरो याति द्वौ मासौ मृगशूकरौ ।
अहिरेकं दिनं यातु अद्य भक्ष्यो धनुर्गुणः ॥

ततः प्रथमबुभुक्षायामिदं निःस्वादु कोदंडलग्नं स्नायुबंधनं खादामि, इत्युक्त्वा

तथाकृते सति छिन्ने स्नायुबंधने उत्पतितेन धनुषा हृदि निर्भिन्नः स दीर्घरावः पंचत्वंगागतः। अतोऽहं ब्रवीमि कर्तव्यः संचयो नित्यमित्यादि।
तथा च। यद् ददाति यदश्नाति तदेव धनिनो धनं।
अन्ये मृतस्य क्रीडंति दारैरपि धनैरपि॥
किंच। यद् ददाति विशिष्टेभ्यो यच्चाश्नाति दिने दिने।
तद् ते वित्तमहं मन्ये शेषं कस्यापि रक्षसि॥
यातु किमिदानीमतिक्रांतोपवर्णनेन।
यतः। नांमाप्यमभिवांछंति नष्टं नेच्छंति शोचितुं।
आपत्स्वपि न मुह्यंति नराः पंडितबुद्धयः॥
तत् सखे सर्वदा त्वया सोत्साहेन भवितव्यं।
यतः शास्त्राण्यधीत्यापि भवंति मूर्खा यस्तु क्रियावान् पुरुषः स विद्वान्।
सुचिंतितं चौषधमातुराणां न नाममात्रेण करोत्यरोगं।
अन्यच्च। न स्वल्पमप्यध्यवसायभीरोः करोति विज्ञानविधि र्गुणं हि।
अंधस्य किं हस्ततलस्थितोऽपि प्रकाशयत्यर्थमिह प्रदीपः।
तदत्र सखे दशाविशेषे शांतिः करणीया, एतदप्यतिकष्टं त्वया न मंतव्यं।
यतः। राजा कुलवधू र्विप्रा मंत्रिणश्च पयोधराः।
स्थानभ्रष्टा न शोभंते दंताः केशा नरा नखाः॥
इति विज्ञाय मतिमान् स्वस्थानं न परित्यजेत्, कापुरुषवचनमेतत्।
यतः। स्थानमुत्सृज्य गच्छंति सिंहाः सत्पुरुषा गजाः।
तत्रैव निधनं यांति काकाः कापुरुषा मृगाः॥
तथा चोक्तं को वीरस्य मनस्विनः स्वविषयः कोवा विदेशस्तथा,
यं देशं श्रयते तमेव कुरुते बाहुप्रतापार्जितं।
यद् दंष्ट्रानखलांगुलप्रहरणः सिंहो वनं गाहते,
तस्मिन्नेव हतद्विपेंद्ररुधिरैस्तृष्णां छिनत्त्यात्मनः॥

अपरंच। निपानमिव मंडूकाः सरः पूर्णमिवांडजाः।
सोद्योगं नरमायांति विवशाः सर्वसंपदः॥
अन्यच्च। सुखमापतितं सेव्यं दुःखमापतितं तथा।
चक्रवत् परिवर्तंते दुःखानि च सुखानि च॥
अन्यच्च। उत्साहसंपन्नमदीर्घसूत्रं क्रियाविधिज्ञं व्यसनेष्वसक्तं।
शूरं कृतज्ञं दृढसौहृदं च लक्ष्मीः स्वयं याति निवासहेतोः॥
विशेषतश्च। विनाप्यर्थैर्वीरः स्पृशति बहुमानोन्नतिपदं,
समायुक्तोप्यर्थैः परिभवपदं याति कृपणः।
स्वभावादुद्भूतां गुणसमुदयावाप्तिविषयां,
द्युतिं सैंहीं किं श्वा धृतकनकमालोपि लभते॥
किंच। धनवानिति हि मदो मे किं गतविभवो विषादमुपयामि।
करनिहितकंदुकसमाः पातोत्पाता मनुष्याणां॥
अपरं च। अभ्रच्छाया खलप्रीति र्नवशस्यानि योषिताः।
किंचित्कालोपभोग्यानि यौवनानि धनानि च॥
अन्यच्च। वृत्यर्थं नातिचेष्टेत सा हि धात्रैव निर्मिता।
गर्भादुत्पातिते जंतौ मातुः प्रस्रवतः स्तनौ॥
अपिच सखे। येन शुक्लीकृता हंसाः शुकाश्च हरितीकृताः।
मयूराश्चित्रिता येन स ते वृत्तिं विधास्यति॥
अपरं च। सतां रहस्यं शृणु मित्र।
जनयंत्यर्जने दुःखं तापयंति विपत्तिषु।
मोहयंति च संपत्तौ कथमर्थाः सुखावहाः॥
अपरं च। धर्मार्थं यस्य वित्तेहा वरं तस्य निरीहता।
प्रक्षालनाद्धि पंकस्य दूरादस्पर्शनं वरं॥
यतः। यथा ह्यामिषमाकाशे पक्षिभिः श्वापदै र्भुवि।
भक्ष्यते सलिले नक्रैस्तथा सर्वत्र वित्तवान्॥

अन्यच्च। राजतः सलिलादग्नेश्चोरतः स्वजनादपि ।
भयमर्थवतां नित्यं मृत्योः प्राणभृतामिव ॥
तथाहि। जन्मनि क्लेशबहुले किंनु दुःखमतः परं ।
इच्छासंपद्यतो नास्ति यच्चेच्छा न निवर्तते ॥
अन्यच्च। भ्रातः शृणु। धनं तावदसुलभं लब्धं कृच्छ्रेण रक्षति ।
लब्धनाशो यथा मृत्युस्तस्मादेतन्न चिंतयेत् ॥
तृष्णां चेह परित्यज्य को दरिद्रः क ईश्वरः ।
तस्याश्चेत् प्रसरो दत्तो दास्यं च शिरसि स्थितं ॥
अपरं च। यद्यदेव हि वांछेत ततो वांछा प्रवर्तते ।
प्राप्त एवार्थतः सोऽर्थस्ततो वांछा निवर्तते ॥
किं बहुना मम पक्षपातेन मयैव सहात्र कालो नीयतां ।
यतः। आमरणांताः प्रणयाः कोपास्तत् क्षणभंगुराः ।
परित्यागाश्च निःसंगा भवंति हि महात्मनां ॥
इति श्रुत्वा लघुपतनको ब्रूते धन्योऽसि मंथर सर्वथा श्लाघ्यगुणोऽसि ।
यतः। संत एव सतां नित्यमापदुद्धरणक्षमाः ।
गजानां पंकमग्नानां गजाएव धुरंधराः ॥
श्लाघ्यः स एको भुवि मानवानां स उत्तमः सत्पुरुषः स धन्यः ।
यस्यार्थिनो वा शरणागता वा नाशाभिभंगा विमुखाः प्रयांति ॥

अथ तदेवं ते स्वेच्छाहारविहारं कुर्वाणाः संतुष्टाः सुखं निवसंति । अथ चित्रांगनामा मृगः केनापि त्रासितस्तत्रागत्य मिलितः । तत् पश्चादायांतं मृगमवलोक्य भयं संचिंत्य मंथरो जलं प्रविष्टो मूषिकश्च विवरं गतः काकोऽपि उड्डीय वृक्षमारूढस्ततो लघुपतनकेन सुदूरं निरूप्य भयहेतुर्न कोऽप्यायातीत्यालोचितं । पश्चात् तद्वचनादागत्य पुनः सर्वे मिलित्वा तत्रैवोपविष्टाः । मंथरेणोक्तं, भद्र मृग स्वागतं स्वेच्छया उदकाद्याहारोऽनुभूयतां अत्रावस्थानेन वनमिदं सनाथी क्रियतां । चित्रांगो ब्रूते लुब्धकत्रासितोऽहं

भवतां शरणमागतः, भवद्भिः सह सख्यमिच्छामि। हिरण्यकोऽवदत् मित्र तावदस्माभिः सह भवता यत्नेन मिलितं।

यतः। औरसं कृतसंबंधं तथा वंशक्रमागतं।
रक्षितं व्यसनेभ्यश्च मित्रं ज्ञेयं चतुर्विधं ॥१॥

तदत्र भवता स्वगृहनिर्विशेषं स्थीयतां। तच्छ्रुत्वा मृगः सानंदो भूत्वा स्वेच्छाहारं कृत्वा पानीयं पीत्वा जलासन्नतरुच्छायायामुपविष्टः। अथ मंथरेणोक्तं, सखे मृग एतस्मिन् निर्जने वने केन त्वं त्रासितः? कदाचित् किं व्याधाः संचरंति? मृगेणोक्तं, अस्ति कलिंगविषये रुक्मांगदो नाम नरपति र्दिग्विजयव्यापारक्रमेणागत्य चंद्रभागानदीतीरे समावासितकटको वर्त्तते। प्रातश्च तेनात्रागत्य कर्पूरसरःसमीपे भवितव्यमिति व्याधानां मुखात् किंवदंती श्रूयते तदत्रापि प्रातरवस्थानं भयहेतुकमित्यालोच्य यथावसरं कार्यमारभ्यतां। तच्छ्रुत्वा कूर्मः सभयमाह जलाशयांतरं गच्छामि। काकमृगावपि उक्तवंतावेवमस्तु। ततो हिरण्यको विहस्याह जलाशयांतरे प्राप्ते मंथरस्य कुशलं स्थले गच्छतः कः प्रतीकारः।

यतः। अंभांसि जलजंतूनां दुर्गं दुर्गनिवासिनां।
स्वभूमिः श्वापदादीनां राज्ञां मंत्री परं बलं ॥१॥
शृगालेन हतो हस्ती गच्छता पंकवर्त्मना।
भविष्यसि तथैव त्वं प्रयास्यन् स्थलवर्त्मना ॥२॥

ततो मंथरेणोक्तं कथमेतत्। हिरण्यकः कथयति, अस्ति ब्रम्हारण्ये कर्पूरतिलको नाम हस्ती, तमवलोक्य सर्वे शृगालाश्चिंतयंतिस्म यद्ययं केनाप्युपायेन म्रियेत तदास्माकमेतद् देहेन मासचतुष्टयस्य भोजनं भविष्यति। तत्र एकेन वृद्धशृगालेन प्रतिज्ञातं मया बुद्धिप्रभावादस्य मरणं साधयितव्यम्। अनंतरं स वंचकः कर्पूरतिलकसमीपं गत्वा साष्टांगपातं प्रणम्य उवाच देव दृष्टिप्रसादं कुरु। हस्ती ब्रूते, कस्त्वं? कुतः समायातः? सोऽवदत् जंबुकोहं सर्वैर्वनवासिभिः पशुभि र्मिलित्वा

भवत्सकाशं प्रस्थापितः भवद्विना राजा आवयोर्न गुणो । [illegible]
राज्ये अभिषेक्तुं भवान् सर्वस्वामिगुणोपेतो निरूपितः ।
यतः । यः कुलाभिजनाचारैरतिशुद्धः प्रतापवान् ।
धार्मिको नीतिकुशलः स स्वामी युज्यते भुवि ॥
अपरंच पश्य। राजानं प्रथमं विंदेत् ततो भार्यां ततो धनं ।
राजन्यसति लोकेऽस्मिन् कुतो भार्या कुतो धनं ॥
अन्यच्च । पर्जन्य इव भूतानामाधारः पृथिवीपतिः ।
विकलेऽपि हि पर्जन्ये जीव्यते न तु भूपतौ ॥
नियतविषयवर्ती प्रायशो दंडयोगाज्जगति परवशेऽस्मिन् दुर्लभः
साधुवृत्तः । कृशमपि विकलं वा व्याधितं वा धनं वा पतिमपि
कुलनारी दंडभीत्याभ्युपैति ॥
तद् यथा लग्नवेला न विचलति तथा कृत्वा सत्वरमागम्यतां देवेन ।
इत्युक्त्वा उत्थाय चलितः । ततोऽसौ राज्यलोभाकृष्टः कर्पूरतिलकः शृगाल-
वर्त्मना धावन् महापंके निमग्नः । ततस्तेन हस्तिना उक्तं, सखे शृगाल किं अधुना
विधेयं? पंके निपतितोऽहं म्रिये परावृत्य पश्य । शृगालेन विहस्योक्तं, देव
मम पुच्छकावलंबनं कृत्वा उत्तिष्ठ ; यस्य मद्विधस्य वचसि त्वया प्रत्ययः
कृतः तदनुभूयतामशरणं दुःखमिति ।
तथा चोक्तं। यदि सत्संगनिरतो भविष्यसि भविष्यसि ।
तथा सज्जनगोष्ठीषु पतिष्यसि पतिष्यसि ॥
ततो माहापंके निमग्नो हस्ती शृगालैर्भक्षितः । अतोऽहं ब्रवीमि शृगालेन
हतो हस्तीत्यादि । तद्धितवचनमवधीर्य महता भयेन विमुग्धइव तज्जलाश-
यमुत्सृज्य मंथरश्चलितः, तेऽपि हिरण्यकादयः स्नेहादनिष्टं शंकमाना मंथरमनु-
गच्छंति । ततः स्थले गच्छन् केनापि व्याधेन काननं पर्यटता मंथरः प्राप्तः ।
प्राप्य च तं गृहीत्वा उत्थाप्य धनुषि बध्वा भ्रमन् क्लेशात् क्षुत्पिपासाकुलः स्व-
गृहाभिमुख चलितः । अथ मृगवायसमूषिकाः परं विषादं गच्छंतस्तमनुजग्मुः
ततः हिरण्यको विलपति ।

एकस्य दुःखस्य न यावदंतं गच्छाम्यहं पारमिवार्णवस्य ।
तावद् द्वितीयं समुपस्थितं मे छिद्रेष्वनार्था बहुला भवंति ॥

स्वाभाविकं तु यन्मित्रं भाग्येनैवाभिजायते ।
तदकृत्रिमसौहार्दमापत्स्वपि न मुंचति ॥
न मातरि न दारेषु न सोदर्ये न चात्मनि ।
विश्वासस्तादृशः पुंसां यावन्मित्रे स्वभावजे ॥

इति मुहुर्विचिंत्य अहो दुर्दैवं ।

यतः स्वकर्मसंतापविचेष्टितानि कालांतरावर्त्ति शुभाशुभानि ।
इहैव दृष्टानि मयैव तानि जन्मांतराणीव दशांतराणि ॥

अथवा इत्थमेवैतत् ।

कायः सन्निहितापायः संपदः पदमापदां ।
समागमाः सापगमाः सर्वमुत्पादि भंगुरं ॥

पुनर्विमृष्याह ।

शोकारातिभयत्राणं प्रीतिविश्रंभभाजनं ।
केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयं ॥

किंच । मित्रं प्रीतिरसायनं नयनयोरानंदनं चेतसः,
पात्रं यत् सुखदुःखयोः सह भवेन् मित्रेण तद् दुर्लभं ।
ये चान्ये सुहृदः समृद्धिसमये द्रव्याभिलाषाकुलाः,
ते सर्वत्र मिलंति तत्त्वनिकषग्रावा तु तेषां विपत् ॥

इति बहु विलप्य हिरण्यकश्चित्रांगलघुपतनकावाह, । यावदयं व्याधो वनान्न निःसरति तावन् मंथरं मोचयितुं यत्नः क्रियतां । तावूचतुः सत्वरं कार्यमुच्यतां । हिरण्यको ब्रूते, चित्रांगो जलसमीपं गत्वा मृतमिव आत्मानं दर्शयतु । काकश्च तस्योपरि स्थित्वा चंच्वा किमपि विलिखतु, नूनमनेन

लुब्धकेन तत्र कच्छपं परित्यज्य मृगमांसार्थिना सत्वरं गंतव्यं, तदाहं मंथरस्य बंधनं छेत्स्यामि. संनिहिते लुब्धके भवद्भ्यां पलायितव्यं । चित्रांगलघुपतनकाभ्यां शीघ्रं गत्वा तथानुष्ठिते सति स व्याधः श्रांतः पानीयं पीत्वा तरोरधस्तादुपविष्टः तथाविधं मृगमपश्यत् । ततः कर्त्तरिकामादाय प्रहृष्टमना मृगांतिकं चलितः । तत्रांतरे हिरण्यकेनागत्य मंथरस्य बंधनं छिन्नं स कूर्मः सत्वरं जलाशयं प्रविवेश, स मृग आसन्नं तं व्याधं विलोक्य उत्थाय पलायितः । प्रत्यावृत्य लुब्धको यावत् तरुतलमायाति तावत् कूर्ममपश्यन्नचिंतयत्, उचितमेवैतत् ममासमीक्ष्यकारिणः ।

यतः । यो ध्रुवाणि परित्यज्य अध्रुवाणि निषेवते ।
ध्रुवाणि तस्य नश्यंति अध्रुवं नष्टमेव हि ॥

ततोसौ स्वकर्मवशात् निराशकटकं प्रविष्टः ।

कर्त्तव्याणि च मित्राणि दुर्गमानि वनानि च ।
पश्य कूर्मपति बद्धो मूषिकेन विमोचितः ॥

मंथरादयः सर्वे त्यक्तापदः स्वस्थानं गत्वा यथासुखमास्थिताः । अथ राजपुत्रैः सानंदचेतोभिः सर्वं तत् श्रुतं । सर्वे ते सुखिनः संपन्नास्तस्मात् सिद्धं नः समीहितं । विष्णुशर्मोवाच एतावता भवतामभिलषितं संपन्नं. अपरमपीदमस्तु.

मित्रं प्राप्नुत सज्जना जनपदै र्लक्ष्मीः समालंब्यतां ।
भूपालाः परिपालयंतु वसुधां शश्वत् स्वधर्मे स्थिताः ।
आस्तां मानसतुष्टये सुकृतिनां नीति र्नवोढेव वः ।
कल्याणं कुरुतां जनस्य भगवांश्चंद्रार्धचूडामणिः ॥

इति हितोपदेशे मित्रलाभो नाम प्रथमःकथासंग्रहः समाप्तः ॥

# अथ द्वितीयभागो सुहृद्भेदः

अथ राजपुत्रा ऊचुः, आर्य मित्रलाभः श्रुतस्तावदस्माभिरिदानीं वयं सुहृद्भेदं श्रोतुमिच्छामः । विष्णुशर्मोवाच, सुहृद्भेदं तावत् शृणुत यस्यायमाद्यः श्लोकः ।

वर्द्धमानो महास्नेहो मृगेंद्रवृषयो वने ।
पिशुनेनातिलुब्धेन जंबुकेन विनाशितः ॥

राजपुत्रैरुक्तं, कथमेतत्? विष्णुशर्मा कथयति, अस्ति दक्षिणापथे सुवर्णवती नाम नगरी, तत्र वर्धमानोनाम वणिक् निवसति । तस्य प्रचुरेऽपि वित्ते अपरान् बंधूनतिसमृद्धान् समीक्ष्य पुनरर्थवृद्धिः करणीयेति मति र्बभूव ।

यतः । अधोधः पश्यतः कस्य महिमा नोपचीयते ।
उपर्युपरि पश्यंतः सर्व एव दरिद्रति ॥

अपरंच । ब्रम्हहापि नरः पूज्यो यस्यास्ति विपुलं धनं ।
शशिनस्तुल्यवंशोपि निर्द्धनः परिभूयते ॥

अन्यच्च । अव्यवसायिनमलसं दैवपरं साहसाच्च परिहीनं ।
प्रमदेव वृद्धपतिं नेच्छत्युपग्रहीतुं लक्ष्मीः ॥

किंच । आलस्यं स्त्रीसेवा सरोगता जन्मभूमिवात्सल्यं ।
संतोषोतिभीरुत्वं षड्व्याघाता महत्त्वस्य ॥

यतः । संपदा सुस्थितं मन्यो भवति स्वल्पयापि यः ।
कृतकृत्यो विधि र्मन्ये न वर्द्धयति तस्य तां ॥

अपरंच । निरुत्साहं निरानंदं निर्वीर्यमरिनंदनं ।
मास्म सीमंतिनी काचित् जनयेत् पुत्रमीदृशं ॥

तथा चोक्तं । अलब्धंचैव लिप्सेत लब्धं रक्षेदवक्षयात् ।
रक्षितं वर्द्धयेत् सम्यक् वृद्धं तीर्थेषु निःक्षिपेत् ॥

यतः। अलब्धमिच्छतोऽर्थं योगादर्थस्य प्राप्तिरेव।
लब्धस्याप्यरक्षितस्य निधेरपि स्वयं विनाशः॥
अपिच। अवर्द्धमानश्चार्थः काले स्वल्पभोगोऽप्यंजनवत् क्षयमेति।
अनुपभुज्यमानश्च निष्प्रयोजन एव सः॥
तथा चोक्तं। धनेन किं यो न ददाति नाश्नुते,
बलेन किं यश्च रिपुं न बाधते।
श्रुतेन किं यो न च धर्ममाचरेत्,
किमात्मना यो न जितेंद्रियो भवेत्॥
यतः। जलबिंदुनिपातेन क्रमशः पूर्यते घटः।
स हेतुः सर्वविद्यायां धर्मस्य च धनस्य च॥
दानोपभोगरहिता दिवसा यस्य यांति वै।
स कर्मकारभस्त्रेव श्वसन्नपि न जीवति॥

इति संचित्य नंदकसंजीवकनामानौ वृषभौ धुरि नियुज्य शकटं नानाविधद्रव्यपूर्णं कृत्वा वाणिज्येन गतः काश्मीरं प्रति।

अन्यच्च। अंजनस्य क्षयं दृष्ट्वा वल्मीकस्य च संचयं।
अवंध्यं दिवसं कुर्याद् दानाध्ययनकर्मसु॥
यतः। कोतिभारः समर्थानां किं दूरं व्यवसायिनां।
को विदेशः सविद्यानां कः परः प्रियवादिनां॥

अथ गच्छतस्तस्य सुदुर्गनाम्नि महारण्ये संजीवको भग्नजानु र्निपतितः; तमालोक्य वर्द्धमानोऽचिंतयत्।

करोतु नामनीतिज्ञो व्यवसायमितस्ततः
फलं पुनस्तदेवास्य यद्विधे र्मनसि स्थितं॥
किंतु। विस्मयः सर्वथा हेयः प्रत्यूहः सर्वकर्मणां।
तस्माद् विस्मयमुत्सृज्य साध्ये सिद्धि र्विधीयतां॥

इति संचित्य संजीवकं तत्र परित्यज्य वर्द्धमानः पुनः स्वयं धर्मपुरं नाम नगरं

गत्वा महाकायमन्यवृषभमेकं समानीय धुरि नियोज्य चलितः। ततः संजीवकोपि कथं कथमपि खुरत्रये भरं कृत्वोत्थितः।

यतः। निमग्नस्य पयोराशौ पर्वतात् पतितस्य च।
तक्षकेणापि दष्टस्य आयु र्मर्माणि रक्षति ॥
नाकाले म्रियते जंतु र्विद्धः शरशतैरपि।
कुशाग्रेणैव संस्पृष्टः प्राप्तकालो न जीवति।
अरक्षितं तिष्ठति दैवरक्षितं सुरक्षितं दैवहतं विनश्यति।
जीवत्यनाथोपि वने विसर्जितः कृतप्रयत्नोपि गृहे न जीवति।

ततो दिनेषु गच्छत्सु संजीवकः स्वेच्छाहारविहारं कृत्वा अरण्यं भ्राम्यन् हृष्टपुष्टांगो बलवान् ननाद। तस्मिन् वने पिंगलकनामा सिंहः स्वभुजोपार्जितराज्यसुखमनुभवन् निवसति।

तथा चोक्तं। नाभिषेको न संस्कारः सिंहस्य क्रियते मृगैः।
विक्रमार्जितराज्यस्य स्वयमेव मृगेंद्रता ॥

स चैकदा पिपासाकुलितः पानीयं पातुं यमुनाकच्छमगच्छत्, तेन च तत्र सिंहेनाननुभूतमकालघनगर्जितमिव संजीवकनर्दितमश्रावि, तच्छ्रुत्वा पानीयमपीत्वा सचकितः परिवृत्य स्वस्थानमागत्य किमिदमित्यालोचयन् तूष्णीं स्थितः। स च तथाविधः करटकदमनकाभ्यामस्य मंत्रिपुत्राभ्यां शृगालाभ्यां दृष्टः, तं तथाविधं दृष्ट्वा दमनकः करटकमाह, सखे करटक किमित्ययं उदकार्थी स्वामी पानीयमपीत्वा सचकितो मंदं मंदमवतिष्ठते। करटको ब्रूते, मित्र दमनकास्मन्मतेनास्य सेवैव न क्रियते, यदि तथा भवति तर्हि किमनेन स्वामिचेष्टानिरूपणेनास्माकं? यतश्चानेन राज्ञा विनाऽपराधेन चिरदिवसम् अवधीरिताभ्यामावाभ्यां महद् दुःखमनुभूतं।

अपरंच पश्य। सेवया धनमिच्छद्भिः सेवकैः पश्य यत् कृतं।
स्वातंत्र्यं यच्छरीरस्य मूढैस्तदपि हारितं ॥
अपरंच। शीतवातातपक्लेशान् सहंते यान् पराश्रिताः।
तदंशेनापि मेधावी तपस्तप्त्वा सुखी भवेत् ॥

अन्यच्च । एतावज्जन्मसाफल्यं यदनायत्तवृत्तिता ।
ये पराधीनतां याता स्ते वै जीवंति के मृताः ॥

अपरंच । एहि गच्छ पतोत्तिष्ट वद मौनं समाचर ।
एवमाशाग्रहग्रस्तैः क्रीडंति धनिनोऽर्थिभिः ॥

किंच । अबुधैरर्थलाभाय पण्यस्त्रीभिरिव स्वयं ।
आत्मा संस्कृत्य संस्कृत्य परोपकरणीकृतः ॥

किंच । या प्रकृत्यैव चपला निपतत्यशुचावपि ।
स्वामिनो बहु मन्यंते दृष्टिं तामपि सेवकाः ॥

अपरंच । मौनान् मूर्खः प्रवचनपटु र्वातुलो जल्पको वा,
क्षांत्या भीरु र्यदि न सहते प्रायशो नाभिजातः ॥
धृष्टः पार्श्वे वसति नियतं दूरतश्चाप्रगल्भः,
सेवाधर्मः परमगहनो योगिनामप्यगम्यः ॥

विशेषतश्च। प्रणमत्युन्नतिहेतो र्जीवितहेतो र्विमुंचति प्राणान् ।
दुःखीयति सुखहेतोः को मूढः सेवकादन्यः ॥

दमनको ब्रूते, मित्र सर्वदा मनसापि नैतत् कर्त्तव्यं ।

यतः । कथं नाम न सेव्यंते यत्नतः परमेश्वराः ।
अचिरेणैव ये तुष्टाः पूरयंति मनोरथान् ॥

अन्यच्च पश्य। कुतः सेवाविहीनानां चामरोत्धृतसंपदः ।
उद्दंडधवलछत्रवाजिवारणवाहिनी ॥

करटको ब्रूते, तथापि किमनेनास्माकं व्यापारेण? यतः अव्यापारेषु व्यापारः सर्वथा परिहरणीयः ।

पश्य । अव्यापारेषु व्यापारं यो नरः कर्त्तुमिच्छति ।
स भूमौ निहतः शेते कीलोत्पाटीव वानरः ॥

दमनकः पृच्छति कथमेतत्? करटकः कथयति, अस्ति मगधदेशे धर्मारण्यसन्निहितवसुधायां शुभदत्तनाम्ना कायस्थः, तेन विहारः कर्त्तुमारब्धः तत्र करपत्रदार्य्यमाणैकस्तंभस्य कियद् दूरस्फाटितस्य काष्ठखंडद्वयमध्ये कीलकं निधाय

सूत्रधारेण धृतं। तत्र बलवान् वानरयूथात् क्रीडन्नेको वानरः कालप्रेरित इव तं कीलकं हस्ताभ्यां धृत्वोपविष्टः। तत्र तस्य लांगूलं लंबमानं काष्ठखंडद्वयाभ्यंतरे प्रविष्टं। अनंतरं स च सहजचपलतया महता प्रयत्नेन तं कीलकं आकृष्टवान्, आकृष्टे च कीलके धृतलांगूलो व्यापादितश्च। अतोऽहं ब्रवीमि अव्यापारेषु व्यापारमित्यादि। दमनको ब्रूते, तथापि स्वामिचेष्टानिरूपणं सेवकेनावश्यं करणीयं। करटको ब्रूते, सर्वस्मिन्नधिकारे य एव नियुक्तः प्रधानमंत्री स करोतु यतोऽनुजीविना पराधिकारचर्चा सर्वथा न कर्त्तव्या।

पश्य। पराधिकारचर्चां यः कुर्यात् स्वामिहितेच्छया।
स विषीदति चीत्काराद् गर्द्दभस्ताडितो यथा॥

दमनकः पृच्छति कथमेतत्? करटको ब्रूते, अस्ति वाराणस्यां कर्पूरपटको नाम रजकः स चाभिनववयस्कया वध्वा सह निर्भरमालिंग्य प्रसुप्तः। तदनंतरं तद्गृहद्रव्याणि हर्त्तुं चौरः प्रविष्टः तस्य प्रांगणे गर्द्दभो बद्धस्तिष्ठति, कुक्कुरश्चोपविष्टोऽस्ति। अथ गर्द्दभः श्वानमाह, सखे भवतस्तावदयं व्यापारस्तत् किमिति? त्वमुच्चैः शब्दं कृत्वा स्वामिनं न जागरयसि? कुक्कुरो ब्रूते, भद्र मम नियोगस्य चर्चा त्वया न कर्त्तव्या त्वमेव किं न जानासि यथा तस्याहर्निशं गृहरक्षां करोमि यतोऽयं चिरान्निर्वृतो ममोपयोगं न जानाति? तेनाधुनापि ममाहारदाने मंदादरः, यतोविना विधुरदर्शनं स्वामिन उपजीविषु मंदादरा भवंति। गर्द्दभो ब्रूते शृणु रे वर्वर।

याचते कार्यकाले यः स किं भृत्यः स किं सुहृत्।
अकार्यकार्यकर्त्ता यस्त्वनादिष्टोप्यसौ सुहृत्।

कुक्कुरो ब्रूते, "भृत्यान् संभाषयेद् यस्तु कार्यकाले स किं प्रभुः"।

यतः। आश्रितानां भृतौ स्वामिसेवायां धर्मसेवने।
पुत्रस्योत्पादने चैव न संति प्रतिहस्तकाः॥

ततो गर्द्दभः सकोपमाह, अरे दुष्टमते पापीयांस्त्वं यद् विपत्तौ स्वामिकार्यउपेक्षां करोषि भवतु तावत् यथा स्वामी जागरिष्यति तन्मया कर्त्तव्यं।

यतः । पृष्ठतः सेवयेदर्कं जठरेण हुताशनं ।
स्वामिनं सर्वभावेन परलोकममायया ॥

इत्युक्त्वा अतीव चीत्कारशब्दं कृतवान् । ततः स रजकस्तेन चीत्कारेण प्रबुद्धो निद्राभंगकोपादुत्थाय गर्दभं लगुडेन ताडयामास, तेनासौ पंचत्वमगमत् । अतोहं ब्रवीमि, पराधिकारचर्चामित्यादि । पश्य पशूनामन्वेषणमेवास्मन्नियोगः स्वनियोगचर्चा क्रियतां । विमृश्य । किन्त्वद्य तया चर्चया न प्रयोजनं । यत आवयो र्भक्षितशेषाहारः प्रचुरोस्ति । दमनकः सरोषमाह, कथमाहारार्थी भवान् केवलं राजानं सेवते? एतदयुक्तं तव ।

यतः । सुहृदामुपकारकारणात् द्विषतामप्यपकारकारणात् ।
नृपसंश्रय इष्यते बुधै र्जठरं को न बिभर्ति केवलं ॥
जीविते यस्य जीवंति विप्रा मित्राणि बांधवाः
सफलं जीवितं तस्य आत्मार्थे को न जीवति ॥

अपिच । यस्मिन् जीवति जीवन्ति बहवः स तु जीवतु ।
काकोपि किं न कुरुते चंच्वा स्वोदरपूरणं ॥

पश्य । पंचभि र्याति दासत्वं पुराणैः कोपि मानवः ।
कोपि लक्षैः कृती कोपि लक्षैरपि न लभ्यते ॥

अन्यच्च । मनुष्यजातौ तुल्यायां भृत्यत्वमतिगर्हितं ।
प्रथमो यो न तत्रापि स किं जीवत्सु गण्यते ॥

तथा चोक्तं । वाजिवारणलौहानां काष्ठपाषाणवाससां ।
नारीपुरुषतोयानामंतरं महदंतरं ॥

तथाहि स्वल्पमप्यतिरिच्यते ।

स्वल्पस्नायुवशावशेषमलिनं निर्मांसमप्यस्थिकं,
श्वा लब्ध्वा परितोषमेति न भवेत् तस्य क्षुधः शांतये ।
सिंहो जंबुकमंकमागतमपि त्यक्त्वा निहंति द्विपं,
सर्वः कृच्छ्रगतोपि वांछति जनः सत्वानुरूपं फलं ॥

अपरंच सेव्यसेवकयोरंतरं पश्य।

लांगूलचालनमधश्चरणावपातं,
भूमौ निपत्य वदनोदरदर्शनंच।
श्वा पिंडदस्य कुरुते गजपुंगवस्तु,
धीरं विलोकयति चाटुशतैश्च भुंक्ते॥

किंच। यज्जीवति क्षणमपि प्रथितं मनुष्यैः,
विज्ञानविक्रमयशोभिरभज्यमानं।
तन्नाम जीवितमिह प्रवदंति तज्ज्ञाः,
काकोपि जीवति चिराय बलिंच भुंक्ते॥

अपरंच। यो नात्मनो न च गुरौ न च भृत्यवर्गे,
दीने दयां न कुरुते न च बंधुवर्गे।
किं तस्य जीवितफलेन मनुष्यलोके,
काकोपि जीवति चिरंच बलिंच भुंक्ते।

अपरमपि। अहितहितविचारशून्यबुद्धेः,
श्रुतिसमयै र्बहुभिस्तिरस्कृतस्य।
उदरभरणमात्रकेवलेच्छोः,
पुरुषपशोः पशोश्च को विशेषः॥

करटको ब्रूते, आवां तावदप्रधानौ तदाप्यावयोः किमनया विचारणया? दमनको ब्रूते, कियता कालेनामात्याः प्रधानतामप्रधानतां वा लभंते।

यतः। न कस्यचित् कश्चिदिहस्वभावाद्भवत्युदारोभिमतः खलो वा।
लोके गुरुत्वं विपरीततां वा स्वचेष्टितान्येव नरं नयंति॥

किंच। आरोप्यते शिला शैले यत्नेन महता यथा।
निपात्यते क्षणेनाधस्तथात्मा गुणदोषयोः॥

यात्यधोधो व्रजत्युच्चै र्नरः स्वैरेव कर्मभिः।
कूपस्य खनिता यद्वत् प्राकारस्येव कारकः॥

तद् भद्र स्वयमागतो गम्यतां सर्वथा। करटको ब्रूते, अथ भवान् किं ब्रवीति? स आह, अयं तावत् स्वामी पिङ्गलकः कुतोऽपि कारणात् सचकितः परिवृत्योपविष्टः? करटको ब्रूते, किं तत् त्वं जानासि? दमनको ब्रूते, किमत्राविदितमस्ति।

उक्तंच। उदीरितोऽर्थः पशुनापि गृह्यते,
हयाश्च नागाश्च वहंति देशिताः।
अनुक्तमप्यूहति पंडितो जनः,
परेंगितज्ञानफला हि बुद्धयः॥
आकारैरिंगितैर्गत्या चेष्टया भाषणेन च।
नेत्रवक्त्रविकारैश्च लक्ष्यतेऽन्तर्गतं मनः॥

अत्र भयप्रस्तावे प्रज्ञाबलेनाहमेनं स्वामिनमात्मीयं करिष्यामि।

यतः। प्रस्तावसदृशं वाक्यं सद्भावसदृशं प्रियं।
आत्मशक्तिसमं कोपं यो जानाति स पंडितः॥

करटको ब्रूते, सखे, त्वं सेवानभिज्ञः?

पश्य। अनाहूतो विशेद् यस्तु अपृष्टो बहु भाषते।
आत्मानं मन्यते प्रीतं भूपालस्य स दुर्मतिः॥

दमनको ब्रूते, भद्र, कथमहं सेवानभिज्ञः।

पश्य। किमप्यस्ति स्वभावेन सुंदरं वाप्यसुंदरं।
यदेव रोचते यस्मै भवेत् तत् तस्य सुंदरं॥
यतः। यस्य यस्य हि यो भावस्तेन तेन हि तं नरं।
अनुप्रविश्य मेधावी क्षिप्रमात्मवशं नयेत्॥
अन्यच्च। कोऽत्रेत्यहमिति ब्रूयात् सम्यगादेशयेति च।
आज्ञामवितथां कुर्यात् यथाशक्ति महीपतेः॥
अपरंच। अल्पेच्छु र्धृतिमान् मानच्छायेवानुगतः सदा
आदिष्टो न विकल्पेत स राजवसतौ वसेत्॥

करटको ब्रूते, कदाचित् त्वामनवसरप्रवेशाद् अवमन्यते स्वामी। सचाह, अस्त्वेवं तथाप्यनुजीविना स्वामिसान्निध्यमवश्यं करणीयं।

यतः। दोषभीतेरनारंभस्तत् कापुरुषलक्षणं।
कैरजीर्णभयात् भात भोजनं परिहीयते॥

पश्य। आसन्नमेव नृपति र्भजते मनुष्यं,
विद्याविहीनमकुलीनमसंगतं वा।
प्रायेण भूमिपतयः प्रमदालताश्च,
यः पार्श्वतो वसति तं परिवेष्टयंति॥

करटको ब्रूते, अथ तत्र, गत्वा किं वक्ष्यति भवान्? स आह, शृणु, किमनुरक्तो विरक्तो वा मयि स्वामीति ज्ञास्यामि। करटको ब्रूते, किं तद्ज्ञानलक्षणं? दमनको ब्रूते, शृणु।

दूरादवेक्षणं हासः संप्रश्ने चादरो भृशं।
परोक्षेपि गुणश्लाघा स्मरणं प्रियवस्तुषु॥

तदेव। असेवके चानुरक्ति र्दानं सप्रियभाषणं।
अनुरक्तस्य चिन्हानि दोषेपि गुणसंग्रहः॥

अन्यच्च। कालयापनमासानां वर्द्धनं फलखंडनं।
विरक्तेश्वरचिन्हानि जानीयान् मतिमान् नरः॥

एतद् ज्ञात्वा यथा चायं ममायत्तो भविष्यति तथा करिष्यामि।

यतः। अपायसंदर्शनजां विपत्तिम् उपायसंदर्शनजांच सिद्धिं।
मेधाविनो नीतिविधिप्रयुक्तां पुरः स्फुरंतीमिव दर्शयंति॥

करटको ब्रूते, तथाप्यप्राप्ते प्रस्तावे न वक्तुमर्हसि।

यतः। अप्राप्तकालवचनं बृहस्पतिरपि ब्रुवन्।
प्राप्नुयाद् बुद्ध्यवज्ञानमपमानंच शाश्वतं॥

दमनको ब्रूते, मित्र मा भैषी र्नाहमप्राप्तावसरं वचनं वदिष्यामि।

यतः। आपद्युन्मार्गगमने कार्यकालात्ययेषु च।
अपृष्टेनापि वक्तव्यं भृत्येन हितमिच्छता॥

यदि च प्राणसंशयेनापि मया मंत्रो न वक्तव्यस्तदा भृत्यत्वेन ममानुचितं ।

यतः । कल्पयति येन वृत्तिं येन च लोके प्रशंस्यते सद्भिः ।
स गुणस्तेन च गुणिना संरक्ष्यः संवर्द्धनीयश्च ॥

तद् भद्रानुजानीहि मां, गच्छामि । करटको ब्रूते, शुभमस्तु शिवास्ते पंथानो यथाभिलषितमनुष्ठीयतामिति । ततो दमनको विस्मित इव पिंगलकसमीपं गतः । अथ दूरादेव सादरं राज्ञा प्रवेशितः साष्टांगप्रणिपातं प्रणिपत्योपविष्टः । राजाह, चिराद् दृष्टोसि । दमनको ब्रूते, यद्यपि मया सेवकेन श्रीमद्देवपादानां न किंचित् प्रयोजनमस्ति तथापि प्राप्तकालमनुजीविना सान्निध्यमवश्यं कर्तव्यमित्यागतोस्मि ।

किंच । दंतस्य निर्घर्षणकेन राजन् कर्णस्य कंडूयनकेन वापि ।
तृणेन कार्यं भवतीश्वराणां किमंगवाक्पाणिमता नरेण ॥

यद्यपि चिरेणावधीरितस्य देवपादे मे बुद्धिनाशः शंक्यते तदपि न शंकनीयं

यतः । कदर्थितस्यापि च धैर्यवृत्ते र्बुद्धे र्विनाशो नहि शंकनीयः ।
अधःकृतस्यापि तनूनपातो नाधःशिखा याति कदाचिदेव ॥

देव तत् सर्वथा विशेषज्ञेन स्वामिना भवितव्यं ।

यतः । मणि र्लुठति पादेषु काचः शिरसि धार्यते ।
यथैवास्ते तथैवास्तां काचः काचो मणि र्मणिः ॥

अन्यच्च । निर्विशेषो यदा राजा समं सर्वेषु वर्त्तते ।
तदोद्यमसमर्थानामुत्साहः परिहीयते ॥

किंच । त्रिविधाः पुरुषा राजन् उत्तमाधममध्यमाः ।
नियोजयेत् तथैवैतांस्त्रिविधेष्वेव कर्मसु ॥

यतः । स्थानएव नियोज्यंते भृत्याश्चाभरणानि च ।
न हि चूडामणिः पादे नूपुरं मूर्ध्नि धार्यते ॥

अपि च । कनकभूषणसंग्रहणोचितो,
यदिमणिस्त्रपुणि प्रणिधीयते ।

न स विरौति न चापि हि शोभते,
भवति योजयितुर्वचनीयता ॥
अन्यच्च। मुकुटे रोपितः काचश्चरणाभरणे मणिः।
न हि दोषो मणेरस्ति किंतु साधोरविज्ञता ॥
पश्य। बुद्धिमाननुरक्तोयमयं शूर इतो भयं।
इति भृत्यविचारज्ञो भृत्यैरापूर्य्यते नृपः ॥
तथा हि। अश्वः शस्त्रं शास्त्रं वीणा वाणी नरश्च नारि च।
पुरुषविशेषं प्राप्य भवंति योग्या अयोग्याश्च ॥
अन्यच्च। किं भक्तेनासमर्थेन किं शक्तेनापकारिणा।
भक्तं शक्तंच मां राजन् नावज्ञातुं त्वमर्हसि ॥
यतः। अवज्ञानात् राज्ञो भवति मतिहीनः परिजनः,
ततस्तत् प्रामाण्यात् भवति न समीपे बुधजनः।
बुधैस्त्यक्ते राज्ये नहि भवति नीति र्गुणवती,
विपन्नायां नीतौ सकलमवशं सीदति जगत् ॥
अपरंच। जनं जनपदा नित्यमर्च्चयंति नृपार्च्चितं।
नृपेणावमतो यस्तु स सर्वैरवमन्यते ॥
किंच। बालादपि ग्रहीतव्यं युक्तमुक्तं मनीषिभिः।
रवेरविषये किं न प्रदीपस्य प्रकाशनं ॥

पिंगलकोऽवदत्, भद्र दमनक किमेतत्? त्वमस्मदीयप्रधानामात्यपुत्र इयत्कालं यावत् कुतोपि खलवाक्यात् नागतोऽसि? इदानीं यथाभिमतं ब्रूहि। दमनको ब्रूते, देव पृच्छामि, किंचिदुच्यतां; उदकार्थी स्वामी पानीयमपीत्वा किमिति विस्मितइव तिष्ठति। पिंगलकोऽवदत्, भद्रमुक्तं त्वया किंतु एतद् रहस्यं वक्तुं काचित् विश्वासभूमि र्नास्ति, तथापि निभृतं कृत्वा कथयामि शृणु, संप्रति वनमिदमपूर्व्वसत्वाधिष्ठितं; अतोऽस्माकं त्याज्यं अनेन हेतुना विस्मितोऽस्मि तथा च श्रुतो मयापि महानपूर्व्वशब्दः शब्दानुरूपेणास्य प्राणिनो महता बलेन भवितव्यं। दमनको ब्रूते, देव, अस्ति तावदयं महान् भयहेतुः स शब्दोस्माभिरप्याकर्णितः किंतु स किं मंत्री यः प्रथमं भूमित्यागं पश्चात् युद्धं चोपदिशति। अपरंच, अस्मिन् कार्यसंदेहे भृत्यानामुपयोग एव ज्ञातव्यः।

यतः । बंधुस्त्री भृत्यवर्गस्य बुद्धेः सत्वस्य चात्मनः ।
आपन्निकषपाषाणे नरो जानाति सारतां ॥

सिंहो ब्रूते, भद्र महती शंका मां बाधते । दमनकः पुनराह, स्वगतं, अन्यथा राज्यसुखं परित्यज्य स्थानांतरं गंतुं मां संभाषसे. प्रकाशं ब्रूते, देव यावदहं जीवामि तावत् भयं न कर्तव्यं । किंतु करटकादयो प्याश्वास्यंतां यस्मादापद्-प्रतीकारकाले दुर्लभः पुरुषसमवायः । ततस्तौ दमनककरटकौ राज्ञा सर्वस्वेनापि पूजितौ भयप्रतीकारं प्रतिज्ञाय चलितौ । करटको गच्छन् दमनकमाह सखे, किं शक्यप्रतीकरो भयहेतुरशक्यप्रतीकारो वेति? न ज्ञात्वा भयोपशमं प्रतिज्ञाय कथमयं महाप्रसादो गृहीतः? यतोनुपकुर्वाणो न कस्यापि उपायनं गृण्हीयात् विशेषतो राज्ञः ।

पश्य । यस्य प्रसादे पद्मास्ते विजयश्च पराक्रमे ।
मृत्युश्च वसति क्रोधे सर्वतेजोमयो हि सः ॥

तथा हि । बालोपि नावमंतव्यो मनुष्य इति भूमिपः ।
महती देवताह्येषा नररूपेण तिष्ठति ॥

दमनको विहस्याह, मित्र तूष्णीमास्यतां, ज्ञातं मया भयकारणं, बलीवर्देन नर्दितं तत् वृषभाश्चास्माकमपि भक्ष्याः किं पुनः सिंहस्य । करटको ब्रूते, यद्येवं तदा किं पुनः स्वामित्रासः तत्रैव किमिति नापनीतः? दमनको ब्रूते, यदि स्वामित्रासस्तत्रैव मुच्यते तदा कथमयं महाप्रसादलाभः स्यात्?

अपरंच । निरपेक्षो न कर्त्तव्यो भृत्यैः स्वामी कदाचन ।
निरपेक्षं प्रभुं कृत्वा भृत्यः स्याद् दधिकर्णवत् ॥

करटकः पृच्छति कथमेतत्? दमनकः कथयति, अस्त्युत्तरापथे अर्बुदशिखर-नाम्नि पर्वते दुर्दांतो नाम महाविक्रमः सिंहः, तस्य पर्वतकंदरमधिशयानस्य केसराग्रं कश्चिन्मूषिकः प्रत्यहं छिनत्ति । ततः केसराग्रं लूनं दृष्ट्वा कुपितो विवरांतर्गतं मूषिकमलभमानोऽचिंतयत् ।

क्षुद्रशत्रु र्भवेद् यस्तु विक्रमान्नैव लभ्यते ।
तमाहंतुं पुरस्कार्यः सदृशस्तस्य सैनिकः ॥

इत्यालोच्य तेन ग्रामं गत्वा विश्वासं कृत्वा दधिकर्णनामा विडालो यत्नेनानीय मांसाहारं दत्वा स्वकंदरे स्थापितः । अनंतरं तद्भयात् मूषिकोपि बिलान् न निःसरति, तेनासौ सिंहोऽक्षतकेसरः सुखं स्वपिति; मूषिकशब्दं यदा यदा शृणोति मांसाहारदानेन तं विडालं संवर्द्धयति । अथैकदा स मूषिकः क्षुधापीडितो बहिः संचरन् विडालेन प्राप्तो व्यापादितश्च । अनंतरं स सिंहोऽनेककालं यावन् मूषिकं न पश्यति तत् कृतरवमपि न शृणोति तदा तस्यानुपयोगाद् विडालस्याप्याहारदाने मंदादरो बभूव । ततोसावाहारविरहात् दुर्बलो दधिकर्णोऽवसन्नो बभूव । अतोऽहं ब्रवीमि, निरपेक्षो न कर्त्तव्य इत्यादि । ततो दमनककरटकौ संजीवकसमीपं गतौ तत्र करटकस्तरुतले साटोपमुपविष्टः । दमनकः संजीवकसमीपं गत्वाब्रवीत्, अरे वृषभ एष राज्ञा पिंगलकेनारण्यरक्षार्थं नियुक्तः सेनापतिः । करटकः समाज्ञापयति सत्वरमागच्छ, न चेदस्मादरण्याद् दूरमपसर, अन्यथा ते विरुद्धं फलं भविष्यति; न जाने क्रुद्धः स्वामी किं विधास्यति, तच्छ्रुत्वा संजीवकश्चायात् ।

आज्ञाभंगो नरेंद्राणां ब्राम्हणानामनादरः ।
पृथक् शय्या च नारीणामशस्त्रविहितो वधः ।।

ततो देशव्यवहारानभिज्ञः संजीवकः सभयमुपसृत्य साष्टांगपातं करटकं प्रणतवान् ।

तथा चोक्तं । मतिरेव बलाद्गरीयसी यदभावे करिणामियं दशा ।
इति घोषयतीव डिंडिमः करिणो हस्तिपकाहतः क्वणन् ।।

अथ संजीवकः सशंकमाह । सेनापते किं मया कर्त्तव्यं ? तदभिधीयतां । करटको ब्रूते, वृषभ अत्र कानने तिष्ठसि, अस्मद्देवपदारविंदं प्रणम । संजीवको ब्रूते, तदभयवाचं मे यच्छ, आगच्छामि । करटको ब्रूते शृणु रे बलीवर्द्ध, अलमनया शंकया ।

यतः । प्रतिवाचमदत्त केशवः शपमानाय न चेदिभूभुजे ।
अनुहुंकुरुते घनध्वनिं न हि गोमायुरुतानि केसरी ।।

अन्यच्च। तृणानि नोन्मूलयति प्रभंजनो,
मृदूनि नीचैः प्रणतानि सर्वतः ।
समुच्छ्रितानेव तरून् प्रबाधते,
महान् महत्येव करोति विक्रमं ॥

ततस्तौ संजीवकं कियद् दूरे संस्थाप्य पिंगलकसमीपं गतौ, ततो राज्ञा सादरमालोकितौ प्रणम्योपविष्टौ । राजाह, त्वया स दृष्टः । दमनको ब्रूते, देव दृष्टः किन्तु यद्देवेन ज्ञातं तत् तथा महानेवासौ देवं द्रष्टुमिच्छति किन्तु महाबलोऽसौ । ततः सज्जीभूयोपविश्य दृश्यतां, शब्दमात्रादेव न भेतव्यं ।

तथा चोक्तं। शब्दमात्रान् न भेतव्यमज्ञात्वा शब्दकारणं ।
शब्दहेतुं परिज्ञाय कुट्टिनी गौरवं गता ॥

राजाह, कथमेतत्? दमनकः कथयति अस्ति श्रीपर्वतमध्ये ब्रम्हपुराख्यं नगरं, तच्छिखरप्रदेशे घंटाकर्णो नाम राक्षसः प्रतिवसतीति जनप्रवादः श्रूयते । एकदा घंटामादाय पलायमानः कश्चिच्चौरो व्याघ्रेण व्यापादितः । तत्पाणिपतिता घंटा वानरैः प्राप्ता वानरस्तां घंटाम् अनुक्षणं वादयति ततो नगरजनैः समनुष्यः खादितो दृष्टः प्रतिक्षणं घंटारवश्च श्रूयते । अनंतरं घंटाकर्णः कुपितो मनुष्यान् खादति घंटांच वादयति इत्युक्त्वा सर्वे जना नगरात् पलायिताः । ततः कराला नाम्ना कुट्टिन्या विमृश्य, अनवसरोयं घंटावादः । तत् किं मर्कटा घंटां वादयंति? इति स्वयं विज्ञाय राजा विज्ञापितः: देव, यदि कियद् धनोपक्षयः क्रियते तदाहमेनं घंटाकर्णं साधयामि । ततो राज्ञा तस्यै धनं दत्तं, कुट्टिन्या च मंडलं कृत्वा तत्र गणेशादिपूजागौरवं दर्शयित्वा स्वयं वानरप्रियफलान्यादाय वनं प्रविश्य फलान्याकीर्णानि । ततो घंटां परित्यज्य वानराः फलासक्ताबभूवुः; कुट्टिनी च घंटां गृहीत्वा नगरमागता सर्वजनपूज्याऽभवत् । अतोहं ब्रवीमि शब्दमात्रान्न भेतव्यमित्यादि । ततः संजीवकं आनीय दर्शनं कारितवन्तौ। पश्चात् तत्रैवाश्रिते वृषे तावन्योन्यं परमप्रीत्या चिरं निवसतः। अथ कदाचित् तस्य सिंहस्य भ्राता स्तब्धकर्णनामा सिंहः समागतः । तस्यातिथ्यं कृत्वा समुपविश्य पिंगलकस्तदाहाराय पशुं हंतुं चलितः । अत्रांतरे संजीवको वदति, देव, अद्य हतमृगाणां मांसानि क? राजाह, दमनककरटकौ जानीतः ।

सजीवको ब्रूते, ज्ञायतां किमस्ति नास्ति वा? सिंहो विमृश्याह, नास्त्येव तत् । संजीवको ब्रूते, कथमेतावन्मांसं ताभ्यां खादितं? राजाह, खादितं व्ययितं अवधीरितंच मत्यहमेष क्रमः । संजीवको ब्रूते, कथं श्रीमद्देवपादानामगोचरेणैवं क्रियते? राजाह, मदीयागोचरेणैव क्रियते । अथ संजीवको ब्रूते, नैतदुचितं ।

तथा चोक्तं । नानिवेद्य मकुर्वीत भर्त्तुः किंचिदपि स्वयं ।
कार्य्यमापत्मतीकारादन्यत्र जगतीपते ॥

अन्यच्च । कमंडलूपमो ऽमात्यस्तनुत्यागो बहुग्रहः ।
नृपते किंक्षणो मूर्खो दरिद्रः किं वराटकः ॥
स ह्यमात्यः सदा श्रेयान् काकिनीं यः मवर्द्धयेत् ।
कोषः कोषवतः माणाः माणाः माणा न भूपतेः ॥
किंचान्यै र्न कुलाचारैः सेव्यतामेति पूरुषः ।
धनहीनः स्वपत्न्यापि त्यज्यते किं पुनः परैः ॥

एतच्च राज्ञः मधानं दूषणं ।

अतिव्ययो ऽनपेक्षा च तथार्जनमधर्मतः ।
मोक्षणं दूरसंस्थानं कोषव्यसनमुच्यते ॥

यतः । क्षिममायमनालोच्य व्ययानश्च स्ववांछया ।
परिक्षीयत एवासौ धनी वैश्रवणोपमः ॥

स्तब्धकर्णो ब्रूते, शृणु, भ्रातश्चिराश्रितावेतौ दमनककरटकौ संधिविग्रहकार्याधिकारिणौ च कदाचिदर्थाधिकारे न नियोक्तव्यौ । अपरंच नियोगमस्तावे यन्मया श्रुतं तत् कथ्यते ।

ब्राम्हणः क्षत्रियो बंधु र्नाधिकारे मशस्यते ।
ब्राम्हणः सिद्धमप्यर्थं कृच्छ्रेणापि न यच्छति ॥
नियुक्तः क्षत्रियो द्रव्ये खंड्गं दर्शयते ध्रुवं ।
सर्वस्वं ग्रसते बंधुराक्रम्य ज्ञातिभावतः ॥

अपराधेऽपि निःशंको नियोगी चिरसेवकः ।
स स्वामिनमवज्ञाय चरेच्च निरवग्रहः ॥

उपकर्त्ताधिकारस्थः स्वापराधं न मन्यते ।
उपकारं ध्वजीकृत्य सर्वमेवावलुंपति ॥

उपांशुक्रीडितोऽमात्यः स्वयं राजायते यतः ।
अवज्ञा क्रियते तेन सदा परिचयात् ध्रुवं ॥

अंतर्दुष्टः क्षमायुक्तः सर्वानर्थकरः किल ।
शकुनिः शकटारश्च दृष्टांतावत्र भूपते ॥

सदामात्यो न साध्यः स्यात् समृद्धः सर्व एव हि ।
सिद्धानामयमादेश ऋद्धिश्चित्तविकारिणी ॥

प्राप्तार्थग्रहणं द्रव्यपरीवर्तोऽनुरोधनं ।
उपेक्षा बुद्धिहीनत्वं भोगोऽमात्यस्य दूषणं ॥

नियोग्यार्थग्रहोपायो राज्ञां नित्यपरीक्षणं ।
प्रतिपत्तिप्रदानंच तथा कर्मविपर्ययः ॥

निपीडिता वमंत्युच्चैरंतःसारं महीपते ।
दुष्टव्रणा इव प्रायो भवंति हि नियोगिनः ॥

मुहु नियोगिनो बोध्या वसुधारा महीपते ।
सकृत् किं पीडितंस्नानवस्त्रं मुंचेत् घृतंपयः ॥

एतत् सर्वं यथावसरं ज्ञात्वा व्यवहर्त्तव्यं । सिंहो ब्रूते, अस्ति तावदेवं किंतु एतौ सर्वथा न मम वचनकारिणौ । स्तब्धकर्णो ब्रूते, एतत् सर्वमनुचितं सर्वथा ।

यतः । आज्ञाभंगकरान् राजा न क्षाम्येत् स्वसुतानपि ।
विशेषः कोऽनुरागस्य राजचित्तगतस्य च ।
स्तब्धस्य नश्यति यशो विषमस्य मैत्री,
नष्टेंद्रियस्य कुलमर्थपरस्य धर्मः ।
विद्याफलं व्यसनिनः कृपणस्य सौख्यं,
राज्यं प्रमत्तसचिवस्य नराधिपस्य ॥

अपरंच । तस्करेभ्यो नियुक्तेभ्यः शत्रुभ्यो नृपवल्लभात् ।
नृपति र्निजलोभाच्च प्रजा रक्षेत् पितेव हि ॥

भ्रातः सर्वथास्मद्वचनं क्रियतां, व्यवहारोप्यस्माभिः कृत एव अयं संजीवकः शस्यभक्षको ऽर्थाधिकारे नियुज्यतां, एतद्वचनार्थानुष्ठिते सति तदारभ्य पिंगलकसंजीवकयोः सर्वबंधुपरित्यागेन महता स्नेहेन कालोऽतिवर्त्तते। ततोऽनुजीविनामप्याहारदाने शैथिल्यदर्शनाद् दमनककरटकावन्योन्यं चिंतयतः। तदाह दमनकः। करटक मित्र किं कर्त्तव्यम्? आत्मकृतोऽयं दोषः स्वयं कृतेऽपि दोषे परिदेवनमप्यनुचितं। करटको ब्रूते, अस्त्येवं किंत्वनयो र्महानन्योन्यनिसर्गोपजातस्नेहः कथं भेदयितुं शक्यः? दमनको ब्रूते, उपायः क्रियतां।

तथाचोक्तं। उपायेन हि यच्छक्यं न तच्छक्यं पराक्रमैः ।
काक्या कनकसूत्रेण कृष्णसर्पो निपातितः ॥

करटकः पृच्छति, कथमेतत्? दमनकः कथयति, कस्मिंश्चित् तरौ वायसदंपती निवसतः, तयोश्चापत्यानि तत्कोटरावस्थितकृष्णसर्पेण खादितानि । ततः पुनर्गर्भवती वायसी वायसम् आह नाथ, त्यज्यतामयं तरुः, अत्रावस्थितकृष्ण-सर्पेणावयोः संततिः सततं भक्ष्यते ।

यतः । दुष्टा भार्या शठं मित्रं भृत्याश्चोत्तरदायकाः ।
ससर्पे च गृहे वासो मृत्युरेव न संशयः ॥

वायसो ब्रूते, प्रिये न भेतव्यं, वारं वारं मयैतस्य महापराधः सोढः, इदानीं पुन र्न क्षंतव्यः । वायस्याह कथमेतेन बलवता सार्द्धं भवान् विग्रहितुं समर्थः? वायसो ब्रूते, अलमनया शंकया ।

यतः । बुद्धि र्यस्य बलं तस्य निर्बुद्धेस्तु कुतो बलं ।
पश्य सिंहो मदोन्मत्तः शशकेन निपातितः ॥

वायसी विहस्याह कथमेतत्? वायसः कथयति, अस्ति मंदरनाम्नि पर्वते दुर्दांतोनाम सिंहः स च सर्वदा पशूनां वधं कुर्वन्नास्ते । ततः सर्वैः पशुभिर्मि-

लित्वा स सिंहो विज्ञप्तः मृगेंद्र किमर्थमेकदा बहुपशुघातः क्रियते? यदि प्रसादो भवति तदा वयमेव भवदाहाराय प्रत्यहमेकैकं पशुमुपढौकयामः । ततः सिंहेनोक्तं यद्येतदभिमतं भवतां तर्हि भवतु तत् । ततः प्रभृति एकैकं पशुमुपकल्पितं भक्षयन्नास्ते । अथ कदाचित् वृद्धशशकस्य वारः समायातः सोऽचिंतयत् ।

त्रासहेतो विनीतिस्तु क्रियते जीविताशया ।
पंचत्वं चेद् गमिष्यामि किं सिंहानुनयेन मे ॥

तन्मंदं मंदं गच्छामि । ततः सिंहोपि क्षुधापीडितः कोपात् तमुवाच, कुतस्त्वं विलंब्य समागतोसि? शशको ब्रवीत् देव, नाहमपराधी, आगच्छन् पथि सिंहांतरेण बलाद्धृतः तस्याग्रे पुनरागमनाय शपथं कृत्वा स्वामिनं निवेदयितुं अत्रागतोस्मि । सिंहः सकोपमाह सत्वरं गत्वा दुरात्मानं दर्शय, क्व स दुरात्मा तिष्ठति ! ततः शशकस्तं गृहीत्वा गभीरकूपं दर्शयितुं गतः तत्रागत्य स्वयमेव पश्यतु स्वामीत्युक्त्वा तस्मिन् कूपजले तस्य सिंहस्यैव प्रतिबिंबं दर्शितवान् । ततोऽसौ प्रकटितदंष्ट्रानखप्रकरकंपितस्तब्धके सरः क्रोधात् तस्योपरि आत्मानं निःक्षिप्य पंचत्वं गतः । अतोहं ब्रवीमि बुद्धि यस्येत्यादि । वायस्याह श्रुतं मया सर्वं संप्रति यथा कर्त्तव्यं तद् ब्रूहि । वायसोऽवदत्, अत्रासन्ने सरसि राजपुत्रः प्रत्यहमागत्य स्नाति स्नानसमये तदंगाद् अवतारिततीर्थशिलानिहितकनकसूत्रं चंच्वा विधृत्यानीयास्मिन् कोटरे धारयिष्यसि । अथ कदाचित् स्नातुं जलं प्रविष्टे राजपुत्रे वायस्या तदनुष्ठितं । अथ कनकसूत्रानुसरणप्रवृत्ते राजपुरुषैस्तत्र तरुकोटरे कृष्णसर्पोदृष्टो व्यापादितश्च । अतोऽहं ब्रवीमि उपायेनहि यच्छक्यमित्यादि । करटको ब्रूते, यद्येवं तर्हि गच्छतु भवान् शिवास्ते संतु पंथानः । ततो दमनकः पिंगलकसमीपं गत्वा प्रणम्योवाच, देव, आत्ययिकं किमपि महाभयकारिकार्यं मन्यमानः समागतोस्मि ।

यतः । आपद्युन्मार्गगमने कार्यकालात्ययेषु च ।
कल्याणवचनं ब्रूयादपृष्टोपि हितो नरः ॥

अन्यच्च । भोगस्य भाजनं राजा न राजा कार्यभाजनं ।
राजकार्यपरिध्वंसी मंत्री दोषेण लिप्यते ॥

तथाहि पश्य अमात्यानामेष क्रमः ।

वरं प्राणपरित्यागः शिरसोवापि कर्त्तनं ।
न तु स्वामिपदावाप्तिपातकेच्छोरुपेक्षणं ॥

पिंगलकः सादरमाह, भवान् किं वक्तु मिच्छति । दमनको ब्रूते, देव, संजीवकस्तवोपरि असदृशव्यवहारीव लक्ष्यते तथा चास्मत्सन्निधाने श्रीमद्देवपादानां शक्तित्रयनिंदां कृत्वा राज्यमेवाभिलषति । एतच्छ्रुत्वा पिंगलकः सभयमाश्चर्यं मत्वा तुष्णीं स्थितः । दमनकः पुनराह, देव, सर्वामात्यपरित्यागं कृत्वा एक एवायं यस्त्वया सर्वाधिकारी कृतः स एव दोषः ।

यतः । अत्युच्छ्रियते मंत्रिणि पार्थिवे च,
विष्टभ्य पादावुपतिष्ठते श्रीः ।
सा स्त्री स्वभावादसहा भरस्य,
तयोर्द्वयोरेकतरं जहाति ॥

अपरंच । एकं भूमिपतिः करोति सचिवं राज्ये प्रमाणं यदा,
तं मोहाच्छ्रयते मदः सच मदालस्येन निर्भिद्यते ।
निर्भिन्नस्य पदं करोति हृदये तस्य स्वतंत्रस्पृहा,
स्वातंत्र्यस्पृहया ततः स नृपतेः प्राणांतिकं द्रुह्यति ॥

अन्यच्च । विषदिग्धस्य भक्तस्य दंतस्य चलितस्य च ।
अमात्यस्य च दुष्टस्य मूलादुद्धरणं सुखं ॥

किंच । यः कुर्यात् सचिवायत्तां श्रियं तद्व्यसने सति ।
सोंधवज्जगतीपालः सीदेत् संचारकै विना ॥

विशेषतश्च । सदामात्यो न साध्यः स्यात् समृद्धः सर्व एव हि ।
सिद्धानामयमादेश ऋद्धिश्चित्तविकारिणी ॥

सर्वकार्येषु स्वेच्छातः प्रवर्त्तते तदत्र प्रमाणं स्वामी । एतच्च जानाति ।
न सोस्ति पुरुषो लोके यो न कामयते श्रियं ।
परस्य युवतीं रम्यां सादरं नेक्षतेऽत्र कः ॥

सिंहो विमृश्याह, भद्र यद्यपि एवं तथापि संजीवकेन सह मम महान् स्नेहः।

पश्य। कुर्वन्नपि व्यलीकानि यः प्रियः प्रियएव सः।
अशेषदोषदुष्टोपि कायः कस्य न वल्लभः॥

अन्यच्च। अप्रियाण्यपि कुर्वाणो यः प्रियः प्रियएव सः।
दग्धमंदिरसारेपि कस्य वन्हावनादरः॥

दमनकः पुनरेवाह, देव, स एवातिदोषः।

यतः। यस्मिन्नेवाधिकं चक्षुरारोहयति पार्थिवः।
सुतेऽमात्येऽप्युदासीने स लक्ष्म्या श्रीयते जनः॥

शृणु देव। अप्रियस्यापि पथ्यस्य परिणामः सुखावहः।
वक्ता श्रोता च यत्रास्ति रमंते तत्र संपदः॥

त्वया च मूलभृत्यान् अपास्यायमागंतुकः पुरस्कृतः एतच्चानुचितं कृतं।

यतः। मूलभृत्यान् परित्यज्य नागंतून् प्रतिपालयेत्।
नातःपरतरो दोषो राज्यभेदकरो यतः॥

सिंहो ब्रूते, किमाश्चर्य? मया यदभयवाचं दत्वा नीतः संवर्द्धितश्च तत् कथं मह्यं द्रुह्यति। दमनको ब्रूते, देव।

दुर्जनो नार्ज्जवं याति सेव्यमानोपि नित्यशः।
स्वेदनाभ्यंजनोपायैः श्वपुच्छमिव नामितं॥

अपरंच। स्वेदितो मर्द्दितश्चैव रज्जुभिः परिवेष्टितः।
मुक्तो द्वादशभि र्वर्षैः श्वपुच्छः प्रकृतिं गतः॥

अन्यच्च। वर्द्धयन् वाथ सन्मानं खलानां प्रीतये कुतः।
फलंत्यमृतसेकेपि न पथ्यानि विषद्रुमाः॥

अतोऽहं ब्रवीमि।

अपृष्टोपि हितं ब्रूयात् यस्य नेच्छेत् पराभवं।
एष एव सतां धर्मो विपरीतमतोऽन्यथा॥

तथाचोक्तं । स स्निग्धोऽकुशलान्निवारयति यस्तत्कर्म यन्निर्मलं,
सा स्त्री यानुविधायिनी स मतिमान् यः सद्भिरभ्यर्च्यते ।
सा श्रीर्या न मदं करोति स सुखी यस्तृष्णया मुच्यते,
तन्मित्रं यदकृत्रिमं स पुरुषो यः खिद्यते नेंद्रियैः ॥

यदि संजीवकव्यसनार्दितो विज्ञापितोपि स्वामी न निवर्त्तते तदा भृत्यस्य न दोषः ।

तथा च । नृपः कामासक्तो गणयति न कार्यं न च हितं,
यथेष्टं स्वच्छंदः प्रविचरति मत्तोगजइव ।
ततो मानध्मातः स पतति यदा शोकगहने,
तदा भृत्ये दोषान् क्षिपति न निजं वेत्यविनयं ॥

पिंगलकः स्वगतं ।

न परस्यापराधेन परेषां दंडमाचरेत् ।
आत्मनावगतं कृत्वा बध्नीयात् पूजयेच्च वा ॥

तथाचोक्तं । गुणदोषावनिश्चित्य विधिर्न ग्रहनिग्रहे ।
स्वनाशाय यथान्यस्तो दर्पात् सर्पमुखे करः ॥

प्रकाशं ब्रूते, तदा संजीवकः किं प्रत्यादिश्यतां । दमनकः ससंभ्रममाह देव मैवमेतावता मंत्रभेदो जायते ।

तथा ह्युक्तं । मंत्रबीजमिदं गुप्तं रक्षणीयं यथा तथा ।
मनागपि न भिद्येत तद्भिन्नं न प्ररोहति ॥

किंच । आदेयस्य प्रदेयस्य कर्त्तव्यस्य च कर्मणः ।
क्षिप्रमक्रियमाणस्य कालः पिबति तद्रसं ॥

तदवश्यं समारब्धो महता प्रयत्नेन संपादनीयः ।

किंच । मंत्रो योध इवाधीरः सर्वांगैः संवृतैरपि ।
चिरं न सहते स्थातुं परेभ्यो भेदशंकया ॥

यद्यसौ दृष्टदोषोपि दोषान्निवर्त्य संधातव्यस्तदतीवानुचितं ।

यतः । सकृद्दुष्टं तु यन्मित्रं पुनः संधातुमिच्छति ।
स मृत्युमेव गृण्हाति गर्भमश्वतरी यथा ॥

किंच । अंतर्दुष्टक्षमायुक्तः सर्वानर्थकरः किल ।
शकुनिः शकटारश्च दृष्टांतावत्र भूपते ॥

सिंहो ब्रूते, ज्ञायतां तावत् किमस्माकमसौ कर्त्तुं समर्थः । दमनक आह, देव।

अंगांगिभावमज्ञात्वा कथं सामर्थ्यनिर्णयः ।
पश्य टिट्टिभमात्रेण समुद्रो व्याकुलीकृतः ॥

सिंहः पृच्छति, कथमेतत् ? दमनकः कथयति, दक्षिणसमुद्रतीरे टिट्टिभदंपती निवसतः; तत्र चासन्नप्रसवा टिट्टिभी भर्त्तारमाह, नाथ, प्रसवयोग्यस्थानं निभृतमनुसंधीयतां । टिट्टिभोऽवदत् , भार्ये, इदमेव स्थानं प्रसूतियोग्यं । सा ब्रूते, समुद्रवेलया व्याप्यते स्थानमेतत् । टिट्टिभो ऽवदत्, किमहं निर्बलः समुद्रेण निग्रहीतव्यः । टिट्टिभी विहस्याह, स्वामिंस्त्वया समुद्रेण च महदंतरं ।

अथवा । पराभवं परिछेत्तुमेव योग्यायोग्यं न वेत्ति यः ।
अस्तीह यस्य विज्ञानं कृच्छ्रेणापि न सीदति ॥

अपिच । अनुचितकर्म्मारंभः स्वजनविरोधो बलीयसा स्पर्द्धा ।
प्रमदाजनविश्वासो मृत्यो र्द्वाराणि चत्वारि ॥

ततः स्वामिवचनात् सा कृच्छ्रेण तत्रैव प्रसूता । एतत् सर्वं श्रुत्वा समुद्रेणापि तच्छक्तिज्ञानार्थं तदंडान्यपहृतानि । ततः टिट्टिभी शोकार्त्ता भर्त्तारमाह, नाथ, कष्टमापतितं, तान्यंडानि मे नष्टानि। टिट्टिभोऽवदत् , प्रिये, मा भैषीः, इत्युक्त्वा पक्षिणां मेलकं कृत्वा पक्षिस्वामिनो गरुडस्य समीपं गतः । तत्र गत्वा सकलवृत्तांतः टिट्टिभेन भगवतो गरुडस्य पुरतो निवेदितः देव समुद्रेणाहं स्वगृहावस्थितो विनापराधेनैव निगृहीतः । ततस्तद्वचनमाकर्ण्य गरुत्मता प्रभु र्भगवान् नारायणः सृष्टिस्थितिप्रलयहेतु विज्ञप्तः; स समुद्रम् अंडदानाया-

दिदेश । ततो भगवदाज्ञां मौलौ निधाय समुद्रेण तान्यंडानि टिट्टिभाय समर्पितानि । अतोऽहं ब्रवीमि, अंगांगिभावमज्ञात्वा इत्यादि ।

शास्त्रातिक्रममज्ञात्वा वैरमारभते द्विषः ।
स पराभवमाप्नोति समुद्रइव टिट्टिभात् ॥

राजाह, कथमसौ ज्ञातव्यो द्रोहबुद्धिरिति ? दमनको ब्रूते, यदासौ सदर्पः शृंगाग्रप्रहरणाभिमुखश्चकितइव आगच्छति । तदा ज्ञास्यति स्वामी एवमुक्त्वा संजीवकसमीपं गतः, तत्र गतश्च मंदंमंदमुपसर्पन् विस्मितमिवात्मानमदर्शयत् । संजीवकेन सादरमुक्तं, भद्र, कुशलं ते ? दमनको ब्रूते, अनुजीविनां कुतः कुशलं ?

यतः । संपत्तयः पराधीनाः सदा चित्तमनिर्वृतं ।
स्वजीवितेऽप्यविश्वासस्तेषां ये राजसेवकाः ॥

अन्यच्च । कोऽर्थान् प्राप्य न गर्वितो विषयिनः कस्या पदोऽस्तं गताः,
स्त्रीभिः कस्य न खंडितं भुवि मनः को वास्ति राज्ञां प्रियः ।
कः कालस्य भुजांतरं न च गतः कोर्थी गतो गौरवं,
को वा दुर्जनवागुरासु पतितः क्षेमेण यातः पुमान् ॥

संजिवकेनोक्तं, सखे, ब्रूहि किमेतत् ? दमनक आह, किं ब्रवीमि मंदभाग्यः ।

पश्य । यथा समुद्रे निमग्नो लब्ध्वा सर्पावलंबनं ।
न मुंचति न चाधत्ते तथा मुग्धो ऽस्मि संप्रति ॥

यतः । एकत्र राजविश्वासो नश्यत्यन्यत्र बांधवः ।
किं करोमि क्व गच्छामि पतितो दुःखसागरे ॥

इत्युक्त्वा दीर्घं निःश्वस्योपविष्टः । संजीवको ब्रूते, भवान् अस्मत्कृतज्ञः, तथापि मित्र सुविस्तरं मनोगतमुच्यतां । दमनकः सुनिभृतमाह, यद्यपि राजविश्वासो न कथनीयस्तथापि भवानस्मदीयप्रत्ययादागतः स्थितश्च तन्मयात्र परलोकार्थिनावश्यं तव हितमाख्येयं । शृणु, अयं स्वामी तवोपरि विकृतबुद्धीरहस्युक्तवान्, संजीवकमेव हत्वा स्वपरिवारं तर्पयामि ।

एतच्छ्रुत्वा संजीवकः परं विषादमगमत् । दमनक पुनराह, अलं विषादेन प्राप्तकालकार्यं मनुष्ठीयतां । संजीवकः क्षणं विमृश्याह, निश्चितमिद मुक्तं ।

यतः । दुर्जनगम्या नार्यः प्रायेणापात्रभृद् भवति राजा ।
कृपणानुसारि च धनं देवो गिरिजलधिवर्षी च ।

स्वगतं किं वा दुर्जनचेष्टितं न वेद्मि तद् व्यवहारो निर्णेतुं न शक्यते ।

यतः । कश्चिदाश्रयसौंदर्याद् धत्ते शोभामसज्जनः ।
प्रमदालोचनन्यस्तं मलीमसमिवांजनं ॥

तत्र विचिंत्योक्तं कष्टं किमिदमापतितं ।

यतः । आराध्यमानो नृपतिः प्रयत्नात् ,
न तोषमायाति किमत्र चित्रं ।
अयं त्वपूर्वप्रतिमाविशेषो,
यः सेव्यमानो रिपुतामुपैति ॥

तदयमशक्यप्रयत्नः ।

यतः । निमित्तमुद्दिश्य हि यः प्रकुप्यति,
ध्रुवं स तस्यापगमे प्रसीदति ।
अकारणद्वेषि मनस्तु यस्य,
कथं जनस्तं परितोषयिष्यति ॥

किं मयापकृतं राज्ञः? अथवा निर्निमित्तापकारिणश्च भवंति राजानः। दमनको ब्रूते, एवमेवैतत् शृणु ।

विज्ञैः स्निग्धैरुपकृतमपि द्वेष्यतामेति कश्चित्,
साक्षादन्यैरपकृतमपि प्रीतिमेवोपयाति ।
चित्रं चित्रं किमथ चरितं नैकभावाश्रयाणां,
सेवाधर्मः परमगहनो योगिनामप्यगम्यः ॥

अन्यच्च । सुकृतशतमसत्सु नष्टं सुभाषितशतं च नष्टमबुद्धेषु ।
वचनशतमवचनकरेषु बुद्धिशतमचेतनेषु नष्टं ॥

किंच। चंदनतरुषु भुजंगा जलेषु कमलानि तत्र च ग्राहाः।
गुणघातिनश्च खला भोगेषु अलं सुखान्यविघ्नानि ॥

अन्यच्च। मूलं भुजंगैः कुसुमानि भृंगैः,
शाखा प्लवंगैः शिखराणि भल्लैः।
नास्त्येव तच्चंदनपादपस्य,
यन्नाश्रितं दुष्टतरैश्च हिंस्रैः ॥

दमनको ब्रूते, अयं तावत् स्वामी वाचि मधुरो विषहृदयो ज्ञातः।

यतः। दूरादुच्छ्रितपाणिरार्द्रनयनः प्रोत्सारितार्द्धासनो,
गाढालिंगनतत्परः प्रियकथाप्रश्नेषु दत्तादरः।
अंतर्भूतविषो वहि र्मधुमयश्चातीव मायापटुः,
कोनामायमपूर्वनाटकविधि र्यः शिक्षितो दुर्जनैः ॥

तथाहि। पोतो दुस्तरवारिराशितरणे दीपोऽधकारागमे,
निर्वाते व्यजनं मदान्धकरिणां दर्पोपशांत्यैशृणिः।
इत्थं तद् भुवि नास्ति यस्य विधिना नोपायचिंता कृता,
मन्ये दुर्जन चित्तवृत्तिहरणे धातापि भग्नोद्यमः ॥

संजीवकः पुनर्निश्वस्य कष्टं भोः कथमहं शस्यभक्षकः सिंहेन निपातितव्यः।

यतः। द्वयोरेव समं वित्तं द्वयोरेव समं वल।
तयो र्विवादो मंतव्यो नोत्तमाधमयोः क्वचित् ॥

पुनर्विचिन्त्य केनायं राजा ममोपरि विकारितः, न जाने भेदमुपगतात् राज्ञः सदा भेतव्यं।

यतः। मंत्रिणा पृथिवीपालचित्तं विघटितं क्वचित्।
वलयं स्फटिकस्येव कोहि संधातुमीश्वरः ॥

अन्यच्च। वज्रं च राजतेजश्च द्वयमेवातिभीषणं।
एकमेकत्र पतति पतत्यन्यत् समंततः ॥

ततः संग्रामे मृत्युरेव वरमिदानीं तदाज्ञानुवर्त्तनमयुक्तं ।

यतः । मृतः प्राप्नोति वा स्वर्गं शत्रुं हत्वा सुखानि वा ।
उभावपि हि शूराणां गुणावेतौ सुदुर्लभौ ॥

युद्धकालश्चायं ।

यत्रायुद्धे ध्रुवं मृत्यु र्युद्धे जीवितसंशयः ॥
तमेव कालं युद्धस्य प्रवदंति मनीषिणः ॥

यतः । अयुद्धे हि यदा पश्येन् न किंचिद्धितमात्मनः ।
युध्यमानस्तदा प्राज्ञो म्रियते रिपुणासह ॥
जये च लभते लक्ष्मीं मृतेचापि सुरांगनां ।
क्षणविध्वंसिनः कायाः का चिंता मरणे रणे ॥

एतच्चिंतयित्वा संजीवक आह, भो मित्र, कथम् असौ मां जिघांसु र्ज्ञातव्यः । दमनको ब्रूते, यदा स स्तब्धकर्णः समुन्नतलांगूल उन्नतचरणो विकृतास्यस्त्वां पश्यति तदा त्वमेव स्वविक्रमं दर्शयिष्यसि ।

यतः । बलवानपि निस्तेजाः कस्य नाभिभवास्पदं ।
निःशंकं दीयते लोकैः पश्य भस्मचये पदं ॥

किंतु सर्वमेतत् सुगुप्तमनुष्ठातव्यं नो चेन्न त्वं नाहमित्युक्त्वा दमनकः करटकसमीपं गतः । करटकेनोक्तं, किं निष्पन्नं? दमनकेनोक्तं, निष्पन्नोऽसावन्योन्यभेदः । करटको ब्रूते, कोत्र संदेहः ।

यतः । बंधुः को नाम दुष्टानां कुप्येत् को नातियाचितः ।
को न तृप्यति वित्तेन कुकृत्ये को न पंडितः ॥
अन्यच्च । दुर्वृत्तः क्रियते धूर्त्तैः श्रीमानात्मविवृद्धये ।
किं नाम खलसंसर्गः कुरुते नाश्रयाशवत् ॥

ततो दमनकः पिंगलकसमीपं गत्वा देव समागतोसौ पापाशयः; ततः सज्जीभूय स्थीयतामित्युक्त्वा पूर्वोक्ताकारं कारयामास । संजीवकोप्यागत्य

तथाविधं विकृताकारं सिंहं दृष्ट्वा स्वानुरूपं विक्रमं चकार । ततस्तयोर्युद्धे संजीवकः सिंहेन व्यापादितः । अथ संजीवकं सेवकं पिंगलको व्यापाद्य विश्रांतः सशोक इव तिष्ठति ब्रूते च किं मया दारुणं कर्म कृतं ।

यतः । परैः संभुज्यते राज्यं स्वयं पापस्य भाजनं ।
धर्मातिक्रमतो राजा सिंहो हस्तिवधादिव ॥

अपरंच । भूम्येकदेशस्य गणान्वितस्य भृत्यस्य वा बुद्धिमतः प्रणाशः ।
भृत्यप्रणाशो मरणं नृपाणां नष्टापि भूमिः सुलभा न भृत्याः ॥

दमनको ब्रूते, स्वामिन् कोयं नूतनो न्यायः यदरातिं हत्वा संतापः क्रियते ।

तथाचोक्तं। पिता वा यदि वा भ्राता पुत्रो वा यदि वा सुहृत् ।
प्राणच्छेदकरा राज्ञा हंतव्या भूतिमिच्छता ॥

अपिच। धर्मार्थकामतत्वज्ञो नैकांतकरुणो भवेत् ।
न हि हस्तस्थमप्यन्नं क्षमावान् भक्षितुं क्षमः ॥

किंच । क्षमा शत्रौ च मित्रे च यतीनामेव भूषणं ।
अपराधिषु सत्वेषु नृपाणां सैव दूषणं ॥

अपरंच । राज्यलोभादहंकारादिच्छतः स्वामिनः पदं ।
प्रायश्चित्तं तु तस्यैकं जीवोत्सर्गो न चापरं ॥

अन्यच्च। राजा घृणी ब्राम्हणः सर्वभक्षः,
स्त्री चावशा दुष्प्रकृतिः सहायः।
प्रेष्यः प्रतीपोऽधिकृतः प्रमादी,
त्याज्या इमे सप्त कृतं न वेत्ति ॥

विशेषतश्च। सत्यानृता च परुषा प्रियवादिनी च,
हिंस्रा दयालुरपि चार्थपरा वदान्या ।
नित्यव्यया प्रचुररत्नधनागमा च,
वारांगनेव नृपनीतिरनेकरूपा ॥

इति दमनकेन संतोषितः पिंगलकः स्वां प्रकृतिमापन्नः सिंहासने समुपविष्टः

दमनकः प्रहृष्टमना विजयतां महाराज शुभमस्तु सर्वजगतामित्युक्त्वा यथासुखमवस्थितः । विष्णुशर्मोवाच, सुहृद्भेदः श्रुतस्तावद् भवद्भिः । राजपुत्रा ऊचुः, भवत्प्रसादात् श्रुतः, सुखिनो भूता वयं । विष्णुशर्माब्रवीत् । अपरमपीदमस्तु ।

सुहृद्भेदस्तावद् भवतु भवतां शत्रुनिलये,
खलः कालकूटः प्रलयमुपसर्पत्वहरहः ।
जनो नित्यं भूयात् सकलसुखसंपत्तिवसतिः,
कथारंभे रम्ये सततमिह बालोपि रमतां ॥

इति हितोपदेशे सुहृद्भेदो नाम द्वितीयकथासंग्रहः समाप्तः ।

---

# अथ तृतीय भागो विग्रहः।

पुनः कथारंभकाले राजपुत्रा ऊचुः, आर्य, राजपुत्रा, वयं, तद् विग्रहं श्रोतुं नः कुतूहलमस्ति। विष्णुशर्मणोक्तं यदेवं भवद्भ्यो रोचते कथयामि श्रूयतां, यस्यायमाद्यः श्लोकः।

हंसैः सह मयूराणां विग्रहे तुल्यविक्रमे।
विश्वास्य वंचिता हंसाः काकैः स्थित्वारिमंदिरे॥

राजपुत्रा ऊचुः, कथमेतत्? विष्णुशर्मा कथयति, अस्ति कर्पूरद्वीपे पद्मकेलि नामधेयं सरः, तत्र हिरण्यगर्भो नाम राजहंसः प्रतिवसति। स च सर्वै र्जलचर पक्षिभि र्मिलित्वा पक्षिराज्ये ऽभिषिक्तः।

यतः। यदि न स्यान् नरपतिः सम्यङ्नेता ततः प्रजाः।
अकर्णधारा जलधौ विप्लवेतेह नौरिव॥

अपरंच। प्रजां संरक्षति नृपः सा वर्द्धयति पार्थिवं।
वर्द्धनाद् रक्षणं श्रेयस्तदभावे सदप्यसत्॥

एकदा असौ राजहंसः सुविस्तीर्णकमलपर्यंके सुखासीनः परिवारपरिवृतस्तिष्ठति। ततः कुतश्चित् देशादागत्य दीर्घमुखोनाम बकः प्रणम्योपविष्टः। राजोवाच दीर्घमुख, देशांतरादागतोसि वार्त्तां कथय। स ब्रूते, देव, अस्ति महती वार्ता तां वक्तुं सत्वरमागतोहं श्रूयतां। अस्ति जंबुद्वीपे विंध्योनाम गिरिः, तत्र चित्रवर्णो नाम मयूरः पक्षिराजो निवसति, तस्यानुचरैश्चरद्भिः पक्षिभिरहं दग्धारण्यमध्ये चरन्नवलोकितः पृष्टश्च कस्त्वं? कुतः समागतोसि? तदा मयोक्तं कर्पूर द्वीपस्य राजचक्रवर्त्तिनो हिरण्यगर्भस्य राजहंसस्यानुचरोहं कौतुकाद् देशांतरं द्रष्टुमागतोस्मि। एतच्छ्रुत्वा पक्षिभिरुक्तं अनयोर्देशयोः को देशो

भद्रतरो राजा च । मयोक्तं आः किमेवम् उच्यते महदंतरं यतः कर्पूरद्वीपः स्वर्गएव राजहंसश्च द्वितीयः स्वर्गपतिः, अत्र मरुस्थले पतिता यूयं किंकुरुथ ? अस्मद्देशे गम्यतां । ततोऽस्मद्वचनमाकर्ण्य सर्वे सकोपा बभूवुः ।

तथा चोक्तं। पयः पानं भुजंगानां केवलं विषवर्द्धनं ।
उपदेशो हि मूर्खाणां प्रकोपाय न शांतये ॥
अन्यच्च। विद्वानेवोपदेष्टव्यो नाविद्वांस्तु कदाचन ।
वानरानुपदिश्याथ स्थानभ्रष्टा ययुः खगाः ॥

राजोवाच, कथमेतत् । दीर्घमुखः कथयति, अस्ति नर्मदातीरे विशालः शाल्मलीतरुः, तत्र निजचंचुनिर्मितनीडक्रोडे पक्षिणो वर्षास्वपि सुखं निवसंति । अथैकदा वर्षासु नीलपटलैरावृते नभस्थले धारासारै र्महती वृष्टि र्बभूव । ततो वानरांश्च तरुतलेऽवस्थितान् शीताकुलान् कंपमानान् अवलोक्य कृपया पक्षिभिरुक्तं भो भो वानराः शृणुत ।

अस्माभि र्निर्मिता नीडाश्चंचुमात्राहृतै स्तृणैः ।
हस्तपादादिसंयुक्ता यूयं किमिति सीदथ ॥

तत् श्रुत्वा वानरै र्जातामर्षैरालोचितं, अहो निर्वातनीडगर्भावस्थिताः सुखिनः पक्षिणोऽस्मान् निंदंति भवतु तावद् वृष्टेरुपशमः । अनंतरं शांते पानीयवर्षणे तै र्वानरै र्वृक्षमारुह्य सर्वे नीडा भग्नास्तेषाम् अंडानि चाधः पातितानि । अतोहं ब्रवीमि विद्वानेवोपदेष्टव्य इत्यादि । राजोवाच ततस्तैः किं कृतं ? बकः कथयति ततस्तैः पक्षिभिः कोपादुक्तं, केनासौ राजहंसो राजा कृतः । ततो मयोपजातकोपेनोक्तं, युष्मदीयमयूरः केन राजा कृतः। एतच्छ्रुत्वा ते सर्वे मां हंतुमुद्यताः ततो मयापि स्वविक्रमो दर्शितः ।

यतः । अन्यदा भूषणं पुंसां क्षमा लज्जेव योषितां ।
पराक्रमः परिभवे वैयात्यं सुरतेष्विव ॥

राजा विहस्याह ।

आत्मनश्च परेषां च यः समीक्ष्य बलाबलं ।
अंतरं नैव जानाति स तिरस्क्रियतेऽरिभिः ॥

अन्यच्च । सुचिरं हि चरन् नित्यं क्षेत्रे शस्यमबुद्धिमान् ।
द्वीपिचर्मपरिछन्नो वाग्दोषाद् गर्द्दभो हतः ॥

बकः पृच्छति कथमेतत्? राजा कथयति, अस्ति हास्तिनपुरे विलासो नाम रजकः, तस्य गर्द्दभोऽतिवाहनाद् दुर्बलो मुमूर्षुरिवाभवत् । ततस्तेन रजकेनासौ व्याघ्रचर्मणा प्रच्छाद्यारण्यसमीपे शस्य क्षेत्रे नियुक्तः । ततो दूरात् तमवलोक्य व्याघ्रबुद्ध्या क्षेत्रपतयः सत्वरं पलायंते । अथैकदा केनापि शस्यरक्षकेन धूसरकंबलकृततनुत्राणेन धनुःकांडं सज्जीकृत्यानतकायेनैकांतेस्थितं, तं च दूराद् दृष्ट्वा गर्द्दभः पुष्टांगो यथेष्टशस्य भक्षणजातबलः गर्द्दभीयमिति मत्वा उच्चैः शब्दं कुर्वाणस्तमभिमुखं स धावितः शस्य रक्षकेन गर्द्दभोऽयमिति चित्कारशब्दान्निश्चित्य लीलयैव व्यापादितः । अतोऽहं ब्रवीमि सुचिरं हि चरन् नित्यमित्यादि । दीर्घमुखो ब्रूते, ततः पक्षिभिरुक्तं, अरे पाप दुष्ट बक, अस्माकं भूमौ चरन्नस्माकं स्वामिनमधिक्षिपसि, तन्न क्षंतव्यमिदानीमित्युक्त्वा सर्वे मां चंचुभि र्हत्वा सकोपा ऊचुः पश्य रे मूर्ख, स हंसस्तव राजा सर्वथामृदुः, तस्य राज्याधिकारो नास्ति । यत एकांतमृदुः करतलस्थमप्यर्थं रक्षितुमक्षमः स कथं पृथिवीं शास्ति? राज्यं वा तस्य किं? किंतु त्वंच कूपमंडूकः, तेन तदाश्रयमुपदिशसि शृणु ।

सेवितव्यो महावृक्षः फलच्छायासमन्वितः ।
यदि दैवात् फलं नास्ति छाया केन निवार्यते ॥

अन्यच्च । हीनसेवा न कर्त्तव्या कर्त्तव्यो महदाश्रयः ।
पयोपि शौंडिकीहस्ते वारुणीत्यभिधीयते ॥

अन्यच्च । महानप्यल्पतां याति निर्गुणे गुणविस्तरः ।
आधाराधेयभावेन गजेंद्र इव दर्पणे ॥

विशेषतश्च। व्यपदेशेऽपि सिद्धिः स्यादतिशक्ते नराधिपे ।
शशिनोव्यपदेशेन शशकाः सुखमासते ॥

मयोक्तं कथमेतत्? पक्षिणः कथयंति, कदाचिदपि वर्षासु वृष्टेरभावात् तृषार्त्तो गजयूथो यूथपतिमाह, नाथ, कोऽभ्युपायोऽस्माकं जीवनाय? नास्ति क्षुद्रजंतूनां निमज्जनस्थानं वयंच निमज्जनस्थानाभावान् मृताहा इव किं कुर्मः? क्व यामः? ततो हस्तिराजो नातिदूरं गत्वा निर्मलं ह्रदं दर्शितवान् । ततो दिनेषु गच्छत्सु तत्तीरावस्थिता गजपादाहतिभिश्चूर्णिताः क्षुद्रशशकाः । अनंतरं शिलीमुखोनाम शशकश्चिंतयामास । अनेन गजयूथेन पिपासाकुलितेन प्रत्यहमत्रागंतव्यं । अतो विनश्यत्यस्मत्कुलं । ततो विजयो नाम वृद्धशशको ऽवदत्, मा विषीदत, मयात्रप्रतीकारः कर्त्तव्यः । ततोसौ प्रतिज्ञाय चलितः । गच्छता च तेनालोचितं कथं गजयूथसमीपे स्थित्वावक्तव्यं ।

यतः । स्पृशन्नपि गजो हंति जिघ्रन्नपि भुजंगमः ।
पलायन्नपि भूपालः प्रहसन्नपि दुर्जनः ॥

अतोहं पर्वतशिखरमारुह्य यूथनाथं संवादयामि । तथानुष्ठिते यूथनाथ उवाच, कस्त्वं? कुतः समायातः स ब्रूते, शशकोहं भगवता चंद्रेण भवदंतिकं प्रेषितः । यूथपतिराह, कार्यमुच्यतां । विजयो ब्रूते ।

उद्यतेष्वपि शस्त्रेषु दूतो वदति नान्यथा ।
सदैवावध्यभावेन यथार्थस्य हि वाचकः ॥

तदहं तदाज्ञया ब्रवीमि, शृणु, यदेते चंद्रसरोरक्षकाः शशकास्त्वया निःसारिताः, तदनुचितं कृतं । ते शशकाश्चिरमस्मद्रक्षिताः । अतएव मे शशांकइति प्रसिद्धिः, एवमुक्तवति दूते यूथपति र्भयादिदमाह । देव इदमज्ञानतःकृतं पुन र्न कर्त्तव्यं । दूत उवाच यद्येवं तदत्र सरसि कोपात् कंपमानं भगवंतं शशांकं प्रणम्य प्रसाद्य गच्छ; ततो रात्रौ यूथपतिं गृहीत्वा जले चंचलं चंद्रबिंबं दर्शयित्वा यूथपतिः प्रणामं कारितः, उक्तंच तेन देव अज्ञानादनेनापराधः कृतः ततः क्षम्यतां, नैवं वारांतरं विधास्यते इत्युक्त्वा प्रस्थापितः । अतोऽहं ब्रवीमि व्यपदेशेपि सिद्धिः स्यादिति । ततो मयोक्तं सएवास्मत्प्रभूराजहंसः महाप्रतापोऽतिसमर्थः, त्रैलोक्यस्यापि प्रभुत्वं तत्र युज्यते किं पुनाराज्यमिति । तदाहं तैः पक्षिभिर्दुष्टः कथमस्मद्भूमौ

चरसि? इत्यभिधाय राज्ञश्चित्रवर्णस्य समीपं नीतः । ततो राज्ञः पुरो मां प्रदर्श्य तैः प्रणम्य उक्तं, देव, अवधीयतां, एष दुष्टो बकः यद् अस्मद्देशे चरन्नपि देवपादानधिक्षिपति । राजाह, कोऽयं? कुतः समायातः? ते ऊचु हिरण्यगर्भनाम्नो राजहंसस्यानुचरः कर्पूरद्वीपादागतः । अथाहं गृध्रेण मंत्रिणा पृष्टः, कस्तत्र मुख्यो मंत्रीति । मयोक्तं सर्व शास्त्रार्थपारगः सर्वज्ञो नाम चक्रवाकः । गृध्रो ब्रूते, युज्यते स्वदेशजोऽसौ ।

यतः । स्वदेशजं कुलाचारं विशुद्धमथवा शुचिं ।
मंत्रज्ञमव्यसनिनं व्यभिचारविवर्जितं ॥
अधीतव्यवहारज्ञं मौलं ख्यातं विपश्चितं ।
अर्थस्योत्पादकंचैव विदध्यान्मंत्रिणं नृपः ।

अत्रांतरे शुकेनोक्तं, देव, कर्पूरद्वीपादयो लघुद्वीपाजंबुद्वीपांतर्गताएव । तत्रापि देवपादानामेवाधिपत्यं ततोराज्ञाप्युक्तं एवमेव ।

यतः । राजा मत्तः शिशुश्चैव प्रमादी धनगर्वितः ।
अप्राप्यमभिवांछंति किं पुन र्लभ्यतेऽपि यत् ॥

ततो मयोक्तं, यदि वचनमात्रेणैवाधिपत्यं सिद्धयति तदा जंबुद्वीपेप्यस्मत्प्रभोः हिरण्यगर्भस्य स्वाम्यमस्ति । शुको ब्रूते, कथमत्र निर्णयः? मयोक्तं संग्रामएव । राज्ञा विहस्योक्तं स्वस्वामिनं गत्वा सज्जीकुरु । तदा मयोक्तं स्वदूतोपि प्रस्थाप्यतां । राजोवाच, कः प्रयास्यति? दौत्येन यत एवंभूतो दूतः कार्यः ।

भक्तो गुणी शुचि र्दक्षः प्रगल्भो ऽव्यसनी क्षमी ।
ब्राम्हणः परमर्मज्ञो दूतः स्यात् प्रतिभाववान् ॥

गृध्रो वदति, सत्येवम्भूता बहवः किंतु ब्राम्हण एव कर्त्तव्यः ।

यतः । प्रसादं कुरुते पत्युः संपत्तिं नाभिवांछति ।
कालिमा कालकूटस्य नापैतीश्वरसंगमात् ॥

राजाह, ततः शुक एव व्रजतु; शुक त्वमेवानेन सह गत्वा अस्मदभिलषितं ब्रूहि । शुको ब्रूते यथाज्ञापयति देवः, किंत्वयं दुर्जनो बकः, तदनेन सह न गच्छामि ।

तथाचोक्तं । खलः करोति दुर्वृत्तं नूनं फलति साधुषु ।
दशाननोऽहरत् सीतां बंधनं स्यान् महोदधेः ॥
अपरंच । न स्थातव्यं न गंतव्यं दुर्ज्जनेन समं क्वचित् ।
काकसंगाद्धतो हंसस्तिष्ठन् गच्छंश्च वर्त्तकः ॥

राजोवाच, कथमेतत्? शुकः कथयति, अस्त्युज्जयिनीवर्त्मप्रांतरे प्लक्षतरुः, तत्र हंसकाकौ निवसतः, कदाचित् ग्रीष्मसमये परिश्रांतः कश्चित् पथिकस्तत्र तरुतले धनुःकांडं सन्निधाय सुप्तः । तत्र क्षणांतरे तन्मुखात् वृक्षच्छाया अपगता । ततः सूर्यतेजसा तन्मुखं व्याप्तमवलोक्य तद्वृक्षस्थितेन हंसेन कृपया पक्षौ प्रसार्य पुनस्तन्मुखे छाया कृता । ततो निर्भरनिद्रासुखिना तेन मुखव्यादानं कृतं; अथ सुखमसहिष्णुः स्वभावदौर्ज्जन्येन स काकस्तस्य मुखे पुरीषोत्सर्गं कृत्वा पलायितः । ततो यावदसौ पांथ उत्थाय ऊर्द्ध्वं निरीक्षते तावत् तेनावलोकितो हंसः कांडेन हतो व्यापादितः ।

वर्त्तककथामपि कथयामि, एकदा भगवतो गरुडस्य यात्राप्रसंगेन सर्वे पक्षिणः समुद्रतीरं गताः । ततः काकेन सह वर्त्तकश्चलितः । अथ गोपालस्य गच्छतो दधिभांडाद् वारंवारं तेन काकेन दधि खाद्यते; ततो यावदसौ दधिभांडं भूमौ निधाय ऊर्द्ध्वं मवलोकते तावत् तेन काकवर्त्तकौ दृष्टौ । ततस्तेन खेदितः काकः पलायितः । वर्त्तकः स्वभावनिरपराधो मंदगतिस्तेन प्राप्तो व्यापादितः । अतोहं ब्रवीमि न स्थातव्यं न गंतव्यम् इत्यादि । ततो मयोक्तं भ्रातः शुक किमेवं ब्रवीषि, मांप्रति यथा श्रीमद्देवस्तथा भवानपि । शुकेनोक्तम् अस्त्येवं. ।

किंच । दुर्ज्जनैरुच्यमानानि संमतानि प्रियाण्यपि ।
अकालकुसुमानीव भयं संजनयंति हि ॥

दुर्जनत्वंच भवतो वाक्यादेव ज्ञातं यदनयो र्भूपालयो र्विग्रहे भवद्वचनमेव निदानं । पश्य, प्रत्यक्षेपि कृते दोषे मूर्खः सांत्वेन तुष्यति । ततोऽहं तेन राज्ञा यथा व्यवहारं संपूज्य प्रस्थापितः; शुकोपि मम पश्चादागच्छन्नास्ते । एतत् सर्वं परिज्ञाय यथा कर्त्तव्यमनुसंधीयतां । चक्रवाको विहस्याह, देव,

बकेन तावद् देशांतरमपि गत्वा यथाशक्ति राजकार्यमनुष्ठितं किंतु देव स्वभावएष मूर्खाणां ।

यतः । शतं दद्यान्न विवदेदिति विज्ञस्य संमतं ।
विना हेतुमपि द्वंद्व मेतन्मूर्खस्य लक्षणं ॥

राजाह, किमतीतोपालंभनेन, प्रस्तुतमनुसंधीयतां । चक्रो ब्रूते, देव, विजने ब्रवीमि ।

यतः । वर्णाकारप्रतिध्वानै नेत्रवक्त्रविकारतः ।
अप्यूहंति मनो धीरास्तस्माद्रहसि मंत्रयेत् ॥

अन्यच्च । आकारै रिंगितै र्गत्या चेष्टया भाषणेन च ।
नेत्रवक्त्रविकाराभ्यां ज्ञायतेऽतर्गतं मनः ॥

राजा मंत्री च तत्र स्थितः; अन्ये अन्यत्र गताः । चक्रो ब्रूते, देवाहमेवं जानामि कस्याप्यस्मन्नियोगिनः प्रेरणया बकेनेदमनुष्ठितं ।

यतः । वैद्यानामातुरः श्रेयान् व्यसनी यो नियोगिनां ।
विदुषां जीवनं मूर्खः सद्वर्णो जीवनं सतां ॥

राजाब्रवीत्, भवतु कारणमत्र पश्चान्निरूपणीयं संप्रति यत् कर्त्तव्यं तन्निरूप्यतां । चक्रवाको ब्रूते, देव प्रणिधिस्तावत् प्रहीयतां । ततस्तदनुष्ठानं बलाबलंच जानीमः ।

तथा हि । भवेत् स्वपरराष्ट्राणां कार्याकार्यावलोकने ।
चारचक्षु र्महीभर्त्तु र्यस्य नास्त्यंधएव सः ॥

स च द्वितीयं विश्वासपात्रं गृहीत्वा यातु तेनासौ स्वयं तत्रावस्थाय तत्रत्यमंत्रकार्यं सुनिभृतं निश्चित्य द्वितीयं निगद्य प्रस्थापयति ।

तथा चोक्तं । तीर्थाश्रमे सुरस्थाने शास्त्रविज्ञानहेतुना ।
तपस्वीव्यंजनोपेतैः स्वचरैः सह संवदेत् ॥

गूढचारश्च यो जले स्थले चरति ततोऽसावेव बको नियुज्यतान् । एतादृश एव कश्चिद् बको द्वितीयत्वेन प्रयातु तद्गृहलोकाश्च राजद्वारे तिष्ठंतु किंतु देव एतदपि सुगुप्तमनुष्ठातव्यं ।

यतः । षट्कर्णो भिद्यते मंत्रस्तथा प्राप्तश्च वार्त्तया ।
इत्यात्मना द्वितीयेन मंत्रः कार्यो महीभृता ॥

पश्य । मंत्रभेदेपि ये दोषा भवंति पृथिवीपतेः ।
न शक्यास्ते समाधातुमिति नीतिविदां मतं ॥

राजा विमृश्योवाच प्राप्तस्तावत् मयोत्तमः प्रणिधिः । मंत्री ब्रूते, तदा संग्रामविजयोऽपि प्राप्तः । अत्रांतरे प्रतीहारः प्रविश्य प्रणम्योवाच देव जंबुद्वीपादागतो द्वारि शुकस्तिष्ठति ; राजा चक्रवाकमालोकते । चक्रवाकेणोक्तं तावद्गत्वावासे तिष्ठतु पश्चादानीय द्रष्टव्यः प्रतीहारस्तमावासस्थानं नीत्वा गतः । राजाह विग्रहस्तावत् समुपस्थितः । चक्रो ब्रूते देव प्रागेव विग्रहो न विधिः ।

यतः । सचिवः किं स मंत्री वा य आदावेव भूपतिं ।
युद्धोद्योगं स्वभूत्यागं निर्दिशत्यविचारितं ॥

अपरंच । विजेतुं प्रयतेतारीन् न युद्धेन कदाचन ।
अनित्यो विजयो यस्माद् दृश्यते युध्यमानयोः ॥

अन्यच्च । साम्ना दानेन भेदेन समस्तैरथवा पृथक् ।
साधितुं प्रयतेतारीन् न युद्धेन कदाचन ॥

अपरंच । सर्व एव जनः शूरो ह्यनासादितविग्रहः ।
अदृष्टपरसामर्थ्यः सदर्पः को भवेन् नहि ॥

किंच । न तथोत्थाप्यते ग्रावा प्राणिभि र्दारुणायथा ।
अल्पोपायान् महासिद्धिरेतन् मंत्रफलं महत् ॥

किंतु विग्रहमुपस्थितं विलोक्य व्यवह्रीयतां ।

यतः । यथा कालकृतोद्योगात् कृषिः फलवती भवेत् ।
तद्वन्नीतिरियं देव चिरात् फलति न क्षणात् ॥

अपरंच । महतो दूरभीरुत्वमासन्ने शूरतागुणः ।
विपत्तौ च महाल्लोको धीरतामनुगच्छति ॥
अन्यच्च । प्रत्यूहः सर्वसिद्धीनामुत्तापः प्रथमः किल ।
अतिशीतलमप्यंभः किं भिनत्ति न भूभृतः ॥
विशेषतश्च महाबलोऽसौ चित्रवर्णो राजा ।
यतः । बलिना सह योद्धव्यमिति नास्ति निदर्शनं ।
तद् युद्धं हस्तिना सार्द्धं नराणां मृत्युमावहेत् ॥
अन्यच्च । स मूर्खः कालमप्राप्य योऽपकर्त्तरि वर्त्तते ।
कलि र्बलवता सार्द्धं कीटपक्षोद्गमो यथा ॥
किंच । कौर्मं संकोचमास्थाय प्रहारमपि मर्षयेत् ।
प्राप्तकाले तु नीतिज्ञ उत्तिष्ठेत् क्रूरसर्पवत् ॥
महत्यल्पेप्युपायज्ञः सममेव भवेत् क्षमः ।
समुन्मूलयितुं वृक्षान् तृणानीव नदीरयः ॥
अतस्तद्दूतोप्याश्वास्य तावद् ध्रियतां यावद् दुर्गः सज्जीक्रियते ।
यतः । एकः शतं योधयति प्राकरस्थो धनुर्द्धरः ।
शतं शतसहस्राणि तस्मात् दुर्गं विशिष्यते ॥
किंच । अदुर्गो विषयः कस्य नारेः परिभवास्पदं ।
अदुर्गोऽनाश्रयो राजा पोतच्युतमनुष्यवत् ॥
दुर्गं कुर्यात् महाखातमुच्चप्राकारसंयुतं ।
सयंत्रं सजलं शैलसरिन्मरुवनाश्रयं ॥
विस्तीर्णं चातिविषमं धनधान्यरसान्वितं ।
प्रवेशमसारंच नवैता दुर्गसंपदः ॥
स्वाम्यमात्यसुहृत्कोषा राष्ट्रदुर्गबलानि च ।
परस्परोपकारित्वात् राज्यं सप्तांगमुच्यते ॥
दुर्गाध्यक्षो बलाध्यक्षो धनाध्यक्षश्च भूपतिः ।
दूतः पुरोधा दैवज्ञो भिषजो मंत्रिणो मताः ॥

राजाह, दुर्गानुसंधाने को नियुज्यतां । चक्रो ब्रूते ।

यो यत्र कुशलः कार्य्ये तं तत्र विनियोजयेत् ।
कर्मस्वदृष्टकर्मा यः शास्त्रज्ञोऽपि विमुह्यति ॥

तदाहूयतां सारसः, तथानुष्ठिते सति आगतं सारसमालोक्य राजोवाच, भोः सारस त्वं सत्वरं दुर्गमनुसंधेहि । सारसः प्रणम्योवाच, देव, दुर्गं तावदिदमेव चिरात् सुनिरूपितमास्ते महत् सरः किंत्वत्र मध्यवर्त्तिद्वीपे द्रव्यसंग्रहः क्रियतां ।

यतः । धान्यानां संग्रहो राजन्नुत्तमः सर्वसंग्रहात् ।
निक्षिप्तं हि मुखे रत्नं न कुर्यात् प्राणधारणं ॥

किंच । ख्यातः सर्वरसानां हि लवणो रस उत्तमः ।
गृहीतंच विना तेन व्यंजनं गोमयायते ॥

राजाह, सत्वरं गत्वा सर्व्वमनुतिष्ठ । पुनः प्रविश्य प्रतीहारोब्रूते, देव, सिंहलद्वीपादागतो मेघवर्णोनाम वायसः सपरिवारो द्वारि तिष्ठति, देवपादं द्रष्टुमिच्छति । राजाह, काकाः पुनः सर्वज्ञा बहुद्रष्टारश्च, तद्भवति संग्राह्य इत्यनुमीयते । चक्रो ब्रूते, देव, अस्त्येवं किंतु काकः स्थलचरः तेनास्मद्विपक्षे नियुक्तः कथं संग्राह्यः ।

तथा चोक्तं । आत्मपक्षं परित्यज्य परपक्षेषु यो रतः ।
स परै र्हन्यते मूढो नीलवर्णशृगालवत् ॥

राजोवाच, कथमेतत्? मंत्री कथयति, अस्त्यरण्ये कश्चित् शृगालः स्वेच्छया नगरोपांते भ्राम्यन् नीलीभांडे पतितः; पश्चात् तत उत्थातुमसमर्थः; प्रातरात्मानं मृतवत् संदर्श्य स्थितः । अथ नीलीभांडस्वामिना मृत इति ज्ञात्वा तस्मात् समुत्थाप्य दूरे नीत्वा अपसारितः, तस्मात् पलायितः । ततोऽसौ वनं गत्वा स्वकीयमात्मानं नीलवर्णमवलोक्याचिंतयत्, अहमिदानीमुत्तमवर्णः, तदाहं स्वकीयोत्कर्षं किं न साधयामि? इत्यालोच्य शृगालानाहूय तेनोक्तं, अहं भगवत्या वनदेवतया स्वहस्तेनारण्यराज्ये सर्वौषधिरसेनाभिषिक्तः, तदद्यारभ्यारण्येऽस्मदाज्ञया व्यवहारः कार्यः । शृगालाश्च तं विशिष्टवर्णमव-

लोक्य साष्टांगपातं प्रणम्योचुः, यथा ज्ञापयसे, देव, इत्यनेनैव क्रमेण सर्वेष्वरण्यवासिष्वाधिपत्यं तस्य बभूव । ततस्तेन स्वज्ञातिभिरावृतेनाधिकप्रभुत्वं साधितं । ततस्तेन व्याघ्रसिंहादीनुत्तमपरिजनान् प्राप्य सदसि शृगालानवलोक्य लज्जमानेनावज्ञया स्वज्ञातयः सर्वे दूरीकृताः ततोविषण्णान् शृगालानवलोक्य केनचित्वृद्धशृगालेनैतत् प्रतिज्ञातं, मा विषीदत । यदनेनानभिज्ञेन नीतिविदो मर्मज्ञा वयं स्वसमीपात् दूरीकृताः तद्यथा ऽयं नश्यति तथा विधेयं; ततो ऽमी व्याघ्रादयो वर्णमात्रविप्रलब्धाः शृगालमज्ञात्वा राजानमिमं मन्यंते । तद् यथायं परिचितो भवति तथा कुरुत, तत्र चैवमनुष्ठेयं । अद्य सर्वे संध्यासमये संनिधाने महारवमेकदैव करिष्यथ; ततस्तं शब्दमाकर्ण्य जातिस्वभावात् तेनापि शब्दः कर्त्तव्यः । ततस्तथानुष्ठितेसति तद्वृत्तं ।

यतः । यः स्वभावोहि यस्यास्ते स नित्यं दुरतिक्रमः ।
श्वा यदि क्रियते राजा तत् किं नाश्नात्युपानहं ॥

ततः शब्दादभिज्ञाय स व्याघ्रेण हतः ।

तथा चोक्तं।छिद्रं मर्म च वीर्यंच सर्वं वेत्ति निजो रिपुः ।
दहत्यंतर्गतश्चैव शुष्कं वृक्षमिवानलः ॥

अतोऽहं ब्रवीमि, आत्मपक्षं परित्यज्येत्यादि । राजाह, यद्येवं तथापि दृश्यतां तावदयं दूरादागतः तत्संग्रहे विचारः कार्यः । चक्रो ब्रूते, देव, प्रणिधिः प्रहितो दुर्गंच सज्जीकृतं; अतः शुकोप्यानीय प्रस्थाप्यतां ।

यतः । जघान नंदं चानक्यं तीक्ष्णदूतप्रयोगतः ।
तद् दूरांतरितं दूतं पश्येद् धीरसमन्वितः ॥

ततः सभां कृत्वाहूतः शुकः काकश्च । शुकः किंचिदुन्नतशिरा दत्तासने उपविश्य ब्रूते, भो हिरण्यगर्भ महाराजाधिराजः श्रीमच्चित्रवर्णस्त्वां समाज्ञापयति यदि जीवितेन श्रिया वा प्रयोजनमस्ति तदा सत्वरमागत्यास्मच्चरणौ प्रणम, न चेदवस्थातुं स्थानांतरं चिंतय । राजा सकोपमाह, आः कोप्यस्माकं पुरतो नास्ति? एनं गलहस्तयतु । उत्थाय मेघवर्णो ब्रूते, देवाज्ञापय हंन्मि दुष्टं शुकं । सर्वज्ञो राजानं काकंच शांतयन् ब्रूते, शृणु तावत् ।

न सा सभा यत्र न संति वृद्धा वृद्धा न ते ये न वदंति धर्मं ।
धर्मः स नो यत्र न सत्यमस्ति सत्यं न तद् यच्छलमभ्युपैति ॥

यतो धर्मश्चैषः ।

दूतो म्लेच्छोप्यवध्यः स्यात् राजा दूतमुखो यतः ।
उद्यतेष्वपि शस्त्रेषु दूतो वदति नान्यथा ॥

किंच । स्वापकर्षं परोत्कर्षं दूतोक्तैर्मन्यते तु कः ।
सदैवावध्यभावेन दूतः सर्वं हि जल्पति ॥

ततो राजा काकश्च स्वां प्रकृतिमापन्नः शुकोप्युत्थाय चलितः । पश्चाच्चक्रवाकेनानीय प्रबोध्य कनकालंकारादिकं दत्त्वा संप्रेषितो ययौ । शुकोपि विंध्याचले राजानं प्रणतवान् । राजोवाच, शुक का वार्त्ता? कीदृशोऽसौ देशः? शुको ब्रूते देव, संक्षेपादियं वार्त्ता, संप्रति युद्धोद्योगः क्रियतां, देशश्चासौ कर्पूरद्वीपः स्वर्गैकदेशः राजा च द्वितीयः स्वर्गपतिः कथं वर्णयितुं शक्यते । ततः सर्वान् शिष्टानाहूय राजा मंत्रयितुमुपविष्टः आह च, संप्रति कर्त्तव्यविग्रहे यथा कर्त्तव्यं तथोपदिशत, विग्रहः पुनरवश्यं कर्त्तव्यः ।

तथा चोक्तं । असंतुष्टा द्विजा नष्टाः संतुष्टाश्च महीभुजः ।
सलज्जा गणिका नष्टा निर्लज्जाश्च कुलस्त्रियः ॥

दूरदर्शी नाम गृध्रो ब्रूते, देव, व्यसनितया विग्रहो न विधिः ।

यतः । मित्रामात्यसुहृद्वर्गा यदा स्युर्दृढभक्तयः ।
शत्रूणां विपरीताश्च कर्त्तव्यो विग्रहस्तदा ॥

अन्यच्च । भूमिर्मित्रं हिरण्यंच विग्रहस्य फलं त्रयं ।
यदैतन् निश्चितं भावि कर्त्तव्यो विग्रहस्तदा ॥

राजाह, मद्बलं तावदवलोकयतु मंत्री, तदैतेषां उपयोगो ज्ञायतामेवमाहूयतां मौहूर्तिकः, निर्णीय शुभलग्नं ददातु । मंत्री ब्रूते, तथापि सहसा यात्राकरणमनुचितं ।

यतः । विशंति सहसा मूढा येऽविचार्य द्विषद्बलं ।
खड्गधारापरिष्वंगं लभंते ते सुनिश्चितं ॥

राजाह, मंत्रिन् ममोत्साहभंगं सर्वथा माकृथाः, विजिगीषु र्यथा परभूमिमाक्रामति तथा कथय । गृध्रो ब्रूते तत् कथयामि किंतु तदनुष्ठितमेव फलप्रदं ।

तथाचोक्तं। किं मंत्रेणाननुष्ठाने शास्त्रवित्पृथिवीपतेः ।
न ह्यौषधपरिज्ञानाद् व्याधेः शांतिः क्वचिद् भवेत् ।

राजादेशश्चानतिक्रमणीयः यथा श्रुतं तन्निवेदयामि शृणु ।

नद्यद्रिवनदुर्गेषु यत्र यत्र भयं नृप ।
तत्र तत्र च सेनानी र्यायाद् व्यूहीकृतै र्बलैः ॥
बलाध्यक्षः पुरो यायात् प्रवीरपुरुषान्वितः ।
मध्ये कलत्रं स्वामी च कोशः फल्गु च यद्बलं ॥
पार्श्वयोरुभयोरश्वा अश्वानां पार्श्वतो रथाः ।
रथानां पार्श्वयो र्नागा नागानांच पदातयः ॥
पश्चात् सेनापति र्यायात् खिन्नानाश्वासयन् शनैः ।
मंत्रिभिः सुभटै र्युक्तः प्रतिगृह्य बल नृपः ॥
समेयाद् विषमं नागै र्जलाढ्यं स महीधरं ।
सममश्वै र्जलं नौभिः सर्वत्रैव पदातिभिः ॥
हस्तिनां गमनं प्रोक्तं प्रशस्तं जलदागमे ।
तदन्यत्र तुरंगाणां पत्तीनां सर्वदैव हि ॥
शैलेषु दुर्गमार्गेषु विधेयं नृपरक्षणं ।
स्वयोधै रक्षितस्यापि शयनं योगनिद्रया ॥
नाशयेत् कर्षयेच्छत्रून् दुर्गकंटकमर्द्दकैः ।
परदेशप्रवेशे च कुर्यादाटविकान् पुरः ॥
यत्र राजा ततः कोशो विना कोशान्न राजता ।
स्वभृत्येभ्यस्ततो दद्यात् कोहि दातु र्न युध्यते ॥

यतः । न नरस्य नरो दासो दासश्चार्थस्य भूपते ।
गौरवं लाघवं वापि धनाधननिबंधनं ॥
अभेदेन च युध्येत रक्षेच्चैव परस्परं ।
फल्गुसैन्यंच यत् किंचिन् मध्ये व्यूहस्य कारयेत् ॥
पदातिंच महीपालः पुरोऽनीकस्य योजयेत् ।
उपरुध्यारिमासीनो राष्ट्रंचास्योपपीडयेत् ॥
स्यंदनाश्वैः समे युध्येदनूपे नौ द्विपैस्तथा ।
वृक्षगुल्मावृते चापैरसिचर्मायुधैः स्थले ॥
दूषयेच्चास्य सततं यवसान्नोदकेंधनं ।
भिन्द्याच्चैव तडागानि प्राकारान् परिखांस्तथा ॥
बलेषु प्रमुखो हस्ती न तथान्यो महीपते ।
निजैरवयवैरेव मातंगोऽष्टायुधः स्मृतः ॥
बलमश्वस्य सैन्यानां प्राकारो जंगमो यतः ।
तस्मादश्वाधिको राजा विजयी स्थलविग्रहे ॥

तथा चोक्तं। युध्यमाना हयारूढा देवानामपि दुर्ज्जयाः ।
अपि दूरस्थितास्तेषां वैरिणो हस्तवर्त्तिनः ॥
प्रथमं युद्धकारित्वं समस्तबलपालनं ।
दिग्मार्गयोधशोधित्वं पत्तिकर्म प्रचक्ष्यते ॥
स्वभावशूरमस्त्रज्ञमविरक्तं जितश्रमं ।
प्रसिद्धक्षत्रियप्रायं बलं श्रेष्ठतमं विदुः ॥
यथा प्रभुकृतान्मानाद् युध्यंते भुवि मानवाः ।
न तथा बहुभि र्दत्तै र्द्रविणैरपि भूपते ॥

तथाप्यसारसारः क्रियतां ।

यतः । वरमल्पबलं सारं न कुर्यान् मुंडमंडलीं ।
कुर्यादसारभंगोहि सारभंगमपि स्फुटं ॥

अप्रसादो ऽनधिष्ठानं देशांशहरणंच यत् ।
कालयापो ऽप्रतीकारस्तद् वैराग्यस्य कारणं ॥
आपीडयन् बलं शत्रो र्जिगीषुरतिपीडयेत् ।
सुखसाध्यं द्विषां सैन्यं दीर्घप्रयाणपीडितं ॥
दायादादपरो मंत्रो नास्ति भेदकरो द्विषां ।
तस्मादुत्थापयेद् यत्नाद् दायादं तस्य विद्विषः ॥
संधाय युवराजेन यदि वा मुख्यमंत्रिणा ।
अंतःप्रकोपनं कार्य्यमभियोक्तुः स्थिरात्मनः ॥
क्रूरं मित्रं रणे चापि भंगं दत्वा विघातयेत् ।
अथवा गोग्रहाकृष्टात् तल्लक्ष्याश्रितबंधनात् ॥
स्वराष्ट्रं वासयेद् राजा परदेशावगाहनात् ।
अथवा दानमानाभ्यां वासितं धनदं हि तत् ॥

राजाह, आः किं बहुनोदितेन ।

आत्मोदयपरग्लानि र्द्वयं नीतिरितीयती ।
तदूरीकृत्य कृतिभि र्वाचस्पत्यं प्रतायते ॥

मंत्रिणा विहस्योच्यते सर्वमेतत् विशेषतश्च उच्यते ।

किंतु । अन्यदुच्छृंखलं सत्वमन्यच्छास्त्रनियंत्रितं ।
सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः ॥

तत उत्थाय राजा मौहूर्तिकावेदितलग्ने प्रस्थितः । अथ प्रहितप्रणिधिर्हिरण्यगर्भ्भ आगत्य उवाच, देव, समागतप्रायोराजा चित्रवर्णः संप्रति मलयपर्वताधित्यकायां समावासितकटको ऽनुवर्त्तते, दुर्गशोधनं प्रतिक्षणमनुसंधातव्यं । यतोसौ गृध्रो महामंत्री किंच केनचित् सह तस्य विश्वासकथाप्रसंगेणैव तदिंगितमवगतं मया यदनेन कोप्यस्मद्दुर्गे प्रागेव नियुक्तः । चक्रो ब्रूते, देव काकएवासौ संभवति । राजाह, न कदाचिदेतत् यद्येवं तदा कथं तेन शुकस्याभिभवोद्योगः कृतः? अपरंच शुकस्यागमनात् तस्य विग्रहोत्साहः सचिरादत्रास्ते । मंत्री ब्रूते तथाप्यागंतुः शंकनीयः । राजाह आगंतुका हि कदाचिदुपकारका दृश्यंते ।

शृणु । परोऽपि हितवान् बंधु र्बंधुरप्यहितः परः ।
अहितो देहजो व्याधि र्हितमारण्यमौषधं ॥

अपरंच । आसीद् वीरवरो नाम शूद्रकस्य महीभृतः ।
सेवकः स्वल्पकालेन स ददौ सुतमात्मनः ॥

चक्रः पृच्छति कथमेतत्? राजा कथयति, अहं पुरा शूद्रकस्य राज्ञः क्रीडासरसि कर्पूरकेलिनाम्नो राजहंसस्य पुत्र्यां कर्पूरमंजर्यां महानुरागवानभवं, तत्र वीरवरो नाम महाराजपुत्रः कुतश्चिद् देशादागत्य राजद्वारमुपगम्य प्रतीहार मुवाच, अहं तावद् वेतनार्थी राजपुत्रो राजदर्शनं कारय । ततस्तेनासौ राजदर्शनं कारितो ब्रूते, देव, यदि मया सेवकेन प्रयोजनमस्ति तदास्मद् वर्त्तनं क्रियतां । शूद्रक उवाच किं ते वर्त्तनं? वीरवरो ब्रूते, प्रत्यहं सुवर्णपंचशतानि देहि । राजाह, का ते सामग्री? वीरवरो ब्रूते, द्वौ बाहू तृतीयश्च खड्गः । राजाह नैतच्छक्यं; तच्छ्रुत्वा वीरवरश्चलितः । अथ मंत्रिभिरुक्तं देव दिनचतुष्टयस्य वर्त्तनं दत्वा ज्ञायतामस्य स्वरूपं किमुपयुक्तो ऽयं एतावद् वर्त्तनं गृण्हात्यनुपयुक्तो वेति । ततो मंत्रिवचनादाहूय वीरवराय तांबूलं दत्वा पंचशतानि सुवर्णानि दत्तानि । तद्दचनं तद्विनियोगश्च राजा सुनिभृतं निरूपितः, तदर्द्धं वीरवरेण देवेभ्यो ब्राम्हणेभ्यो दत्तं स्थितस्यार्द्धं दुःखितेभ्यः, तदवशिष्टं भोज्यव्ययविलासव्ययेन, एतत् सर्वं नित्यकृत्यं कृत्वा राजद्वारमहर्निशं खड्गपाणिः शेते; यदा च राजा स्वयं समादिशति, तदा स्वगृहमपि याति । अथैकदा कृष्णचतुर्दश्यां रात्रौ राजा सकरुणं क्रंदनध्वनिं शुश्राव, शूद्रक उवाच, कःकोऽत्र द्वारि? तेनोक्तं देवाहं वीरवरः । राजोवाच, क्रंदनानुसरणं क्रियतां; वीरवरो यथाज्ञापयति देव इत्युक्त्वा चलितः । राज्ञा च चिंतितं नैतदुचितम् अयम् एकाकी राजपुत्रो मया सूचीभेद्ये तमसि प्रेरितः, तदनुगत्वा किमेतदिति निरूपयामि । ततो राजापि खड्गमादाय तदनुसरणक्रमेण नगराद् बहि र्निर्ज्जगाम; गत्वा च वीरवरेण सा रुदती रूपयौवनसंपन्ना सर्वालंकारभूषिता काचित् स्त्री दृष्टा पृष्टा च का त्वं किमर्थं रोदिषि? स्त्रियोक्तं, अहमेतस्य शूद्रकस्य राजलक्ष्मीश्चिरादेतस्य भुजच्छायायां महता सुखेन विश्रांता इदानीमन्यत्र गमिष्यामि । वीरवरो ब्रूते, यत्रापायः संभवति तत्रोपायोऽप्यस्ति तत् कथंस्यात् पुनरिहावलंबनं भवत्याः? लक्ष्मीरुवाच यदि त्वमात्मनः

पुत्रं शक्तिधरं द्वात्रिंशल्लक्षणोपेतं भगवत्याः सर्वमंगलाया उपहारीं करोषि, तदाहं पुनरत्र सुचिरं निवसामीत्युक्त्वाऽदृश्याभवत् । ततो वीरवरेण स्वगृहं गत्वा निद्रायमाणा स्ववधूः प्रबोधिता पुत्रश्च तौ निद्रां परित्यज्य उत्थाय उपविष्टौ वीरवरस्तत् सर्वं लक्ष्मीवचनम् उक्तवान् । तच्छ्रुत्वा सानंदः शक्तिधरो ब्रूते, धन्योऽहमेवंभूतः स्वामिराज्यरक्षार्थं यन्ममोपयोगः श्लाघ्यः, तत् कोऽधुना विलम्बस्य हेतुः? एवं विधे कर्मणि देहस्य विनियोगः श्लाघ्यः ।

यतः । धनानि जीवितंचैव परार्थे प्राज्ञ उत्सृजेत् ।
तन्निमित्तो वरं त्यागो विनाशे नियते सति ॥

शक्तिधरमातोवाच, यद्येतन् न कर्त्तव्यं तत् केनाप्यन्येन कर्मणा मुख्यस्य महावर्त्तनस्य निष्क्रयो भविष्यति? इत्यालोच्य सर्वे सर्वमंगलायाः स्थानं गताः । तत्र सर्वमंगलां संपूज्य वीरवरो ब्रूते, देवि प्रसीद विजयतां विजयतां शूद्रको महाराजः गृह्यतामुपहारइत्युक्त्वा पुत्रस्य शिरश्चिच्छेद । ततो वीरवर श्चिंतयामास, गृहीतराजवर्त्तनस्य निस्तारः कृतः ; अधुना निष्पुत्रस्य जीवनमलम् इत्यालोच्यात्मनः शिरच्छेदः कृतः । ततः स्त्रियापि स्वामिपुत्रशोकार्त्तया तदनुष्ठितं तत्सर्वं दृष्ट्वा राजा साश्चर्यं चिंतयामास ।

जीवंति च म्रियंते च मद्विधाः क्षुद्रजंतवः ।
अनेन सदृशो लोके न भूतो न भविष्यति ॥

तदेतेन परित्यक्तेन मम राज्येनापि अप्रयोजनं, ततः शूद्रकेणापि स्वशिरश्छेत्तुं खड्गः समुत्थापितः । अथ भगवत्या सर्वमंगलया राजहस्तो धृत उक्तश्च, पुत्र प्रसन्नास्मि ते एतावता साहसेन अलं, जीवनांतेपि तव राज्यभंगो नास्ति । राजा च सांष्टांगपातं प्रणम्योवाच, देवि किं मे राज्येन जीवितेन वा किं प्रयोजनं, यद्यहमनुकंपनीयस्तदा ममायुःशेषेण, अयं सदारपुत्रोवीरवरो जीवतु, अन्यथाहं यथाप्राप्तिं गतिं गच्छामि । भगवत्युवाच, पुत्र अनेन ते सत्योत्कर्षेण भृत्यवात्सल्येन च तव तुष्टास्मि, गच्छ, विजयीभव, अयमपि सपरिवारो राजपुत्रो जीवतु, इत्युक्त्वा देव्यदृश्याभवत् । ततो वीरवरः सपुत्रदारो गृहं गतः ; राजापि तैरलक्षितः सत्वरमंतःपुरं प्रविष्टः । अथ प्रभाते वीरवरो

द्वारस्थः पुनर्भूपालेन पृष्टः सन् आह, देव सा रुदती स्त्री मामवलोक्यादृश्याभवत्, न काप्यन्यावार्त्ता विद्यते । तद्वचनमाकर्ण्य राजाऽचिंतयत्, कथमयं श्लाघ्यो महासत्वः ।

यतः । प्रियं कुर्यादकृपणः शूरः स्यादविकत्थनः ।
दाता नापात्रवर्षी च प्रगल्भः स्यादनिष्ठुरः ॥

एतन्महापुरुषलक्षणं एतस्मिन् सर्वमस्ति । ततः सराजा प्रातः शिष्टसभां कृत्वा सर्ववृत्तांतं प्रस्तुत्य प्रसादात् तस्मै कर्णाटराज्यं ददौ । तत् किमागंतुको जातिमात्राद् दुष्टः? तत्रापि उत्तमाधममध्यमाः संति । चक्रवाको ब्रूते,

योऽकार्यं कार्यवत् शास्ति स किं मंत्री नृपेच्छया ॥
वरं स्वामिमनोदुःखं तन् न शासेदकार्यतः ॥
वैद्यो गुरुश्च मंत्री च यस्य राज्ञः प्रियः सदा ।
शरीरधर्मकोशेभ्यः क्षिप्रं स परिहीयते ।

शृणु देव ।

पुण्याल्लब्धं यदेकेन तन् ममापि भविष्यति ।
हत्वा भिक्षुं महालोभान् निध्यर्थी नापितो यथा ॥

राजा पृच्छति कथमेतत्? मंत्री कथयति, अस्त्ययोध्यायां चूडामणि र्नाम क्षत्रियः; तेन धनार्थिना महता क्लेशेन भगवांश्चंद्रार्द्धचूडामणिश्चिरमाराधितः। ततः क्षीणपापोऽसौ स्वप्ने दर्शनं दत्वा भगवदादेशाद् यक्षेश्वरेणादिष्टः यत् त्वमद्य प्रातः क्षौरं कृत्वा लगुडं हस्ते कृत्वा गृहे निभृतं स्थास्यसि, ततोऽस्मिन्नेवांगणे समागतं भिक्षुं पश्यसि, तन्निर्दयं लगुडप्रहारेण हनिष्यसि, ततः सुवर्णकलशो भविष्यति, तेन त्वया यावज्जीवं सुखिना भवितव्यं । ततस्तथानुष्ठिते तद्वृत्तं तत्र क्षौरकरणाय आनीतेन नापितेनालोक्य चिंतितं, अये निधिप्राप्तेरयमुपायः, अहमप्येवं किं न करोमि? ततः प्रभृति नापितः प्रत्यहं तथाविधो लगुडहस्तः सुनिभृतं भिक्षोरागमनं प्रतीक्षते । एकदा तेन प्राप्तो भिक्षु र्लगुडेन व्यापादितः, तस्मादपराधात् सोपि नापितः राजपुरुषै र्व्यापादितः। अतोऽहं ब्रवीमि पुण्याल्लब्धं यदेकेनेत्यादि । राजाह,

पुरावृत्तकथोद्गारैः कथं निर्णीयते परः ।
स्यान्निष्कारणबंधुर्वा किं वा विश्वासघातकः ॥

यातु प्रस्तुतमनुसंधीयतां मलयाधित्यकायां चेत् चित्रवर्णस्तदधुना किं विधेयं? मंत्री वदति, देव आगतप्रणिधिमुखान् मया श्रुतं तन्महामंत्रिणोगृध्रस्य उपदेशे चित्रवर्णेनानादरः कृतः ततोऽसौ मूढो जेतुं शक्यः ।

तथा चोक्तं । लुब्धः क्रूरोऽलसोऽसत्यः प्रमादिभिरवस्थितः ।
मूढो योधावमंता च सुखच्छेद्यो रिपुः स्मृतः ॥

ततोऽसौ यावदस्मद्दुर्गद्वाररोधं न करोति तावन्नद्यद्रिवनवर्त्मसु तद्बलानि हंतुं सारसादयः सेनापतयो नियुज्यंतां ।

तथा च । दीर्घवर्त्मपरिश्रांतं नद्यद्रिवनसंकुलं ।
घोराग्निभयसंत्रस्तं क्षुत्पिपासार्दितं तथा ॥
प्रमत्तं भोजनव्यग्रं व्याधिदुर्भिक्षपीडितं ।
असंस्थितमभूयिष्टं वृष्टिवातसमाकुलं ॥
पंकपांशुजलाच्छन्नं सुव्यस्तं दस्युविद्रुतं ।
एवं भूतं महीपालः परसैन्यं विघातयेत् ॥

अन्यच्च । अवस्कंदभयाद् राजा प्रजागरकृतश्रमं ।
दिवासुप्तं समाहन्यान् निद्राव्याकुलसैनिकं ॥

अतस्तस्य प्रमादिनो बलं गत्वा यथावकाशं दिवानिशं घ्नंत्वस्मत्सेनापतयः । तथानुष्ठिते चित्रवर्णस्य सैनिकाः सेनापतयश्च बहवो निहताः । ततश्चित्रवर्णो विषण्णः स्वमंत्रिणं दूरदर्शिनमाह, तात किमित्यस्मदुपेक्षा क्रियते? किंक्वापि अविनयो ममास्ति?

तथा चोक्तं । न राज्यं प्राप्तमित्येव वर्त्तितव्यमसांप्रतं ।
श्रियं ह्यविनयो हंति जरा रूपमिवोत्तमं ॥

अपि च । दक्षः श्रियमधिगच्छति पथ्याशी कल्पतां सुखमरोगी च ।
उद्युक्तोविद्यांतं धर्मार्थयशांसि विनीतः ॥

गृध्रोऽवदत् देव शृणु ।

अविद्वानपि भूपालो विद्यावृद्धोपसेवया ।
परां छायामवाप्नोति जलासन्नतरुर्यथा ॥

अन्यच्च । पानं स्त्री मृगया द्यूतमर्थदूषणमेव च ।
वाग्दंडयोश्च पारुष्यं व्यसनानि महीभुजां ॥

किंच । न साहसैकांतरसानुवर्त्तिना,
न चाप्युपायोपहतांतरात्मना ।
विभूतयः शक्यमवाप्तु मूर्ज्जिताः
नये च शौर्य्ये च वसंति संपदः ॥

त्वया स्वबलोत्साहमवलोक्य साहसैकवासिना मयोपन्यस्तेष्वपि मंत्रेष्वनवधानं
वाक्पारुष्यंच कृतं, अतो दुर्नीतेः फलमिदमनुभूयते ।

तथा चोक्तं । दुर्मंत्रिणं कमुपयांति न नीतिदोषाः ।
संतापयंति कमपथ्यभुजं न रोगाः ॥
कं श्रीर्न दर्पयति कं न निहंति मृत्युः ।
कं स्त्रीकृता न विषयाः परितापयंति ॥

अपरंच । मुदं विषादः शरदं हिमागमः,
तमो विवस्वान् सुकृतं कृतघ्नता ।
प्रियोपपत्तिः शुचमापदं नयः,
श्रियः समृद्धा अपि हंति दुर्नयः ॥

इत्युक्त्वा तेन मंत्रिणालोचितं प्रज्ञाहीनोऽयं राजा नोचेत् कथं नीतिशास्त्र
कथाकौमुदीं वागुल्काभिस्तिमिरयति ।

यतः । यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किं ।
लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति ॥

इत्यालोच्य तूष्णींस्थितः । अथ राजा बद्धांजलिराह, तात अस्त्ययं ममापराधः
इदानीं यथावशिष्टबलसहितं प्रत्यावृत्य विंध्याचलं गच्छामि तत्रोपदिश
गृध्रः स्वगतं चिंतयति, क्रियतामत्र प्रतीकारः ।

यतः । देवतासु गुरौ गोपु राजसु ब्राम्हणेषु च ।
नियंतव्यः सदा कोपो बालवृद्धातुरेषु च ॥

मंत्री महस्य ब्रूते देव मा भैपीः समाश्वसिहि शृणु देव ।

मंत्रिणां भिन्नसंधाने भिषजां सन्निपातके ।
कर्मणि प्रेक्ष्यते प्रज्ञा सुस्थे को वा न पंडितः ॥

अपरंच । आरभंते ऽल्पमेवाज्ञाः कामं व्यग्रा भवंति च ।
महारंभाः कृतधियस्तिष्ठंति च निराकुलाः ॥

तदत्र भवत्प्रतापादेव दुर्गं भंङ्क्त्वा कीर्तिप्रतापसहितं त्वामचिरेण कालेन विंध्याचलं नेष्यामि । राजाह, कथमधुना स्वल्पबलेन तत् संपद्यते? गृध्रो वदति, देव सर्वं भविष्यति, यतः विजिगीषो दीर्घसूत्रता विजयसिद्धेरवश्यंभावि लक्षणं तत् सहसैव दुर्गावरोधः क्रियतां । प्रहितप्रणिधिना बकेनागत्य हिरण्यगर्भस्य तत् कथितं, देव स्वल्पबलएवायं राजा चित्रवर्णो गृध्रस्य मंत्रावष्टंभेन दुर्गावरोधं करिष्यति । राजाह, सर्वज्ञ किमधुना विधेयं । चक्रो ब्रूते, स्वबले सारासारविचारः क्रियतां तज्ज्ञात्वा सुवर्णवस्त्रादिकं यथार्हं प्रसादप्रदानं क्रियतां ।

यतः । यः काकिनीमप्यपथप्रपन्नां समुद्धरेन् निष्कसहस्रतुल्यां ।
कालेषु कोटिष्वपि मुक्तहस्तस्तं राजसिंहं न जहाति लक्ष्मीः ।

अन्यच्च । क्रतौ विवाहे व्यसने रिपुक्षये,
यशस्करे कर्मणि मित्रसंग्रहे ।
प्रियासु नारीषु नरेषु बांधवे,
ष्वतिव्ययो नास्ति नराधिपाष्टसु ॥

यतः । मूर्खः स्वल्पव्ययत्रासात् सर्व्वनाशं करोति हि ।
कः सुधीः संत्यजेद् भांडं शुल्कस्येवातिसाद्धसात् ॥

राजाह, कथमिह समये अतिव्ययो युज्यते उक्तंच आपदर्थे धनं रक्षेदिति । मंत्री ब्रूते, श्रीमतः कथमापदः? राजाह, कदाचिच्चलते लक्ष्मीः । मंत्री ब्रूते,

संचितार्थो विनश्यति । तदेव कार्पण्यं विमुच्य दानमानाभ्यां स्वभटाः पुरस्क्रियन्तां ।

तथा चोक्तं । परस्परज्ञाः संहृष्टास्त्यक्तुं प्राणान् सुनिश्चिताः ।
कुलीनाः पूजिताः सम्यग्विजयंते द्विषद्बलं ॥

अपरंच । स्वभटाः शीलसंपन्नाः संहताः कृतनिश्चयाः ।
अपि पंचशतं शूरा निघ्नंति रिपुवाहिनीं ॥

किंच । शिष्टैरप्यविशेषज्ञ उग्रश्च कृतनायकः ।
त्यज्यते किं पुनर्नान्यै र्यश्चाप्यात्मंभरि र्नरः ॥

यतः । सत्यं शौर्यं दया त्यागो नृपस्यैते महागुणाः ।
एभि र्मुक्तो महीपालः प्राप्नोति खलु वाच्यतां ॥

ईदृशि प्रस्तावे अमात्यास्तावदेव पुरस्कर्त्तव्याः

तथा चोक्तं । यो येन प्रतिबुद्धः स्यात् सह तेनोदयी व्ययी ।
सुविश्वस्तो नियोक्तव्यः प्राणेषु च धनेषु च ॥

यतः । धूर्त्तः स्त्री वा शिशु र्यस्य मंत्रिणः स्यु र्महीपतेः ।
अनीतिपवनक्षिप्तः कार्याब्धौ स निमज्जति ॥

शृणु देव ।

हर्षक्रोधौ समौ यस्य शास्त्रार्थे प्रत्ययस्तथा ।
नित्यं भृत्यानपेक्षा च यस्य स्याद् धनदा धरा ॥
येषां राज्ञा सह स्यातामुपचयापचयौ ध्रुवं ।
आमात्या इति तान् राजा नावमन्येत् कदाचन ॥

यतः । महीभुजो मदांधस्य संकीर्णस्येव दंतिनः ।
स्खलतो हि करालंबः सुहृत्सचिरचेष्टितं ॥

अथागत्य प्रणम्य मेघवर्णो ब्रूते, देव दृष्टिप्रसादं कुरु, इदानीं विपक्षो दुर्गद्वारि वर्त्तते, तद्देवपादादेशाद् बहिर्निःसृत्य स्वविक्रमं दर्शयामि तेन देवपादानामानृण्यमुपगच्छामि । चक्रो ब्रूते, मैवं यदि बहिर्निःसृत्य योद्धव्यं तदा दुर्गाश्रयणमेव निष्प्रयोजनं ।

अपरंच । विषमोऽपि यथा नक्रः सलिलान् निर्गतोऽवशः ।
वनाद् विनिर्गतः शूरः सिंहोऽपि स्यात् शृगालवत् ॥

देव स्वयं गत्वा दृश्यतां युद्धं ।

यतः । पुरस्कृत्य बलं राजा योधयेदवलोकयन् ।
स्वामिनाधिष्ठितः श्वापि किं न सिंहायते ध्रुवं ॥

अथ ते सर्वे दुर्गद्वारं गत्वा महाहवं कृतवंतः अपरेद्युश्चित्रवर्णो राजा गृध्रमुवाच, तात स्वप्रतिज्ञातमधुना निर्वाहय । गृध्रो ब्रूते, देव शृणु तावत् ।

अकालसहमत्यल्पंमूर्खव्यसनिनायकं ।
अगुप्तं भीरुयोधंच दुर्गव्यसनमुच्यते ॥

तत्तावदत्रनास्ति ।

उपजापश्चिरारोधो अवस्कंदस्तीव्रपौरुषः ।
दुर्गस्य लंघनोपायाश्चत्वारः कथिता इमे ॥

अत्र यथाशक्ति क्रियते यत्नः कर्णे कथयति । एवमेव ततोऽनुदितएव भास्करे चतुर्ष्वपि दुर्गद्वारेषु वृत्ते युद्धे दुर्गाभ्यंतरगृहेष्वेकदा काकैरग्निर्निक्षिप्तः, ततो गृहीतं गृहीतं दुर्गमिति कोलाहलं श्रुत्वा सर्वतः प्रदीप्ताग्निमवलोक्य राजहंससैनिका दुर्गवासिनश्च सत्वरं ह्रदं प्रविष्टाः ।

यतः । सुमंत्रितं सुविक्रांतं सुयुद्धं सुपलायितं ।
कार्यकाले यथाशक्ति कुर्यान् न तु विचारयेत् ॥

राजहंसः स्वभावान् मंदगतिः सारसद्वितीयश्च चित्रवर्णस्य सेनापतिना कुक्कुटेनागत्य वेष्टितः । हिरण्यगर्भः सारसमाह, सारस सेनापते ममानुरोधादात्मानं कथं व्यापादयिष्यसि? त्वमधुना गंतुं शक्तः, तत् कृत्वा जलं प्रविश्यात्मानं परिरक्ष, अस्मत्पुत्रं चूडामणिनामानं सर्वज्ञसंमत्या राजानं करिष्यसि । सारसो ब्रूते, देव न वक्तव्यमेवं दुःसहं वचः, यावत् चंद्रार्कौ दिवि तिष्ठतः, तावत् विजयतां, देव अहं देवदुर्गाधिकारी मन्मांसासृग्विलिप्तेन द्वारवर्त्मना

प्रविशतु शत्रुः । अपरंच दाता क्षमी गुणग्राही स्वामी दुःखेन लभ्यते । राजाह, सत्यमेवैतत् किंतु, शुचिर्दक्षोऽनुरक्तश्च जाने भृत्योपि दुर्लभः । सारसो ब्रूते, शृणु देव ।

यदि समरमपास्य नास्ति मृत्यो,
र्भयमिति युक्तमितोऽन्यतः प्रयातुं ।
अथ-मरणमवश्यमेव जंतोः,
किमिति मुधा मलिनं यशः करोति ॥

अन्यच्च । भवेऽस्मिन् पवनोद्भ्रांतवीचिविभ्रमभंगुरे ।
जायते पुण्ययोगेन परार्थे जीवितव्ययः ॥
स्वाम्यमात्यश्च राष्ट्रंच दुर्गं कोशो वलं सुहृत् ।
राज्यांगानि प्रकृतयः पौराणां श्रेणयोपि च ॥

देव त्वंच स्वामी सर्वथा रक्षणीयः ।

यतः । प्रकृतिः स्वामिनं त्यक्त्वा समृद्धापि न जीवति ।
अपि धन्वंतरिर्वैद्यः किं करोति गतायुषि ॥
अपरंच । नरेशे जीवलोकोऽयं निमीलति निमीलति ।
उदेत्युदीयमाने च, रवाविव सरोरुहं ॥

अथ कुक्कुटेनागत्य राजहंसस्य शरीरे खरतरनखाघातः कृतः । तदा सत्वरमुपसृत्य सारसेन स्वदेहांतरितो राजा जले क्षिप्तः । अथ कुक्कुटैर्नखप्रहारजर्ज्जरीकृतेन सारसेन कुक्कुटसेना वहुशो हताः पश्चात् सारसोपि चंचुप्रहारेण विभिद्य व्यापादितः । अथ चित्रवर्णो दुर्गं प्रविश्य दुर्गावस्थितं द्रव्यं ग्राहयित्वा वंदिभिर्जयशब्दैरानंदितः स्वस्कंधावारं जगाम । अथ राजपुत्रैरुक्तं तस्मिन् राजवले स पुण्यवान् सारस एव येन स्वदेहत्यागेन स्वामी रक्षितः ।

उक्तंचैतत् । जनयंति सुतान् गावः सर्व एव गवाकृतीन् ।
विषाणोल्लिखितस्कंधं काचिदेव गवां पतिं ॥

विष्णुशर्मोवाच, सतानन्द्विद्याधरी परिजनः स्वर्गसुखमनुभवतु महासत्त्वः । तथा चोक्तं। आहवेषु च ये शूराः स्वाम्यर्थे त्यक्तजीविताः ।
भर्तृभक्ताः कृतज्ञाश्च ते नराः स्वर्गगामिनः ॥
यत्र तत्र हतः शूरः शत्रुभिः परिवेष्टितः ।
अक्षयान् लभते लोकान् यदि क्लैव्यं न गच्छति ॥

अपरमप्येवमस्तु ।

विग्रहः करितुरंगपत्तिभि र्नो कदापि भवतां महीभुजां ।
नीतिमंत्रपवनैः समाहताः संश्रयंतु गिरिगव्हरं द्विषः ॥

इति हितोपदेशे नीतिशास्त्रे विग्रहो नाम तृतीयः परिच्छेदः ॥

---

# अथ चतुर्थभागः संधिः।

पुनः कथारंभकाले राजपुत्रैरुक्तं, आर्य, विग्रहः श्रुतोऽस्माभिः संधिरधुनाभिधीयतां। विष्णुशर्मणोक्तं श्रूयतां, संधिमपि कथयामि यस्यायमाद्यः श्लोकः।

वृत्ते महति संग्रामे राज्ञो र्निहतसेनयोः।
स्थेयाभ्यां गृध्रचक्राभ्यां वाचा संधिः कृतः क्षणात् ॥

राजपुत्रा ऊचुः कथमेतत्? विष्णुशर्मा कथयति, ततस्तेन राजहंसेनोक्तं, केनास्मद्दुर्गे निक्षिप्तोऽग्निः किं पारक्येन किंवास्माद्दुर्गवासिना केनापि विपक्षप्रयुक्तेन? चक्रो ब्रूते, देव भवतो निष्कारणबंधुरसौ मेघवर्णः सपरिवारो न दृश्यते तन् मन्ये तस्यैव विचेष्टितमिदं। राजा क्षणं विचिंत्याह, अस्ति तावदेव मम दुर्दैवमेतत्।

तथाचोक्तं। अपराधः स देवस्य न पुन र्मंत्रिणामयं।
कार्यं सुचरितं क्वापि दैवयोगात् विनश्यति ॥

मंत्री ब्रूते, उक्तमेवैतत्।

विषमां हि दशां प्राप्य दैवं गर्हयते नरः।
आत्मनः कर्मदोषांश्च नैव जानात्यपंडितः ॥

अपरंच। सुहृदां हितकामानां यो वाक्यं नाभिनंदति।
सकूर्मइव दुर्बुद्धिः काष्ठाद् भ्रष्टो विनश्यति ॥

अन्यच्च। रक्षितव्यं सदा वाक्यं वाक्याद् भवति नाशनं।
हंसाभ्यां नीयमानाभ्यां कूर्मस्य पतनं यथा ॥

राजाह, कथमेतत्? मंत्री कथयति, अस्ति मगधदेशे फुल्लोत्पलाभिधानं सरः, तत्र चिरं संकटविकटनामानौ हंसौ निवसतः, तयो र्मित्रं कंबुग्रीवनामा कूर्मश्च प्रतिवसति। अथ एकदा धीवरैरागत्य तत्रोक्तं, यदत्र अस्माभिर-

योऽस्मिन्ना मात मत्स्यकूर्मादयोऽव्यापादयितव्याः; तदाकर्ण्य कूर्मो हंसावाह, सुहृदौ श्रुतोऽयं धीवरालापः अधुना किं मया कर्त्तव्यं? हंसावाहतु ज्ञायतां, पुनस्तावत् मात यदुचितं तत् कर्त्तव्यं कूर्मो ब्रूते मैवं यतो दृष्टव्यतिकरोऽहमत्र ।

तथा चोक्तं। अनागतविधाता च प्रत्युत्पन्नमतिस्तथा ।
द्वावेतौ सुखमेधेते यद् भविष्यो विनश्यति ॥

तावाहतुः कथमेतत्? कूर्मः कथयति, पुरास्मिन्नेव सरसि एवं विधेषु धीवरेषु उपस्थितेषु मत्स्यत्रयेणालोचितं । तत्रानागतविधाता नामैकोमत्स्यः, तेनालोचितं अहं तावत् जलाशयांतरं गच्छामीत्युक्त्वा ह्रदांतरं गतः । अपरेण प्रत्युत्पन्नमतिनाम्ना मत्स्येनाभिहितं भविष्यदर्थे प्रमाणाभावात् कुत्र मया गंतव्यं? तदुत्पन्न यथाकार्य तदनुष्टेयं, ततो यद्भविष्येणोक्तं ।

यदभावि न तद्भावि भावि चेन् न तदन्यथा ।
इति चिन्ताविषघ्नोयमगदः किं न पीयते ॥

ततः मात जालेन बद्धः प्रत्युत्पन्नमतिर्मृतवदात्मानं संदर्श्य स्थितः; ततो-जालादपसारितो यथाशक्त्युत्प्लुत्य गभीरं नीरं प्रविष्टः; यद्भविष्यश्च धीवरैः प्राप्तो व्यापादितः । अतोहं ब्रवीमि, अनागतविधातेत्यादि । तद्यथाहमन्यन्ह्रदं प्राप्नोमि तथा क्रियतां । हंसावाहतुः, जलाशयांतरे प्राप्ते तव कुशलं, स्थले गच्छतस्ते को विधिः? कूर्मः आह यथाहं भवद्भ्यांसह आकाशवर्त्मना यामि तथा विधीयतां । हंसौ ब्रूतः कथमुपायः संभवति? कच्छपो वदति, युवाभ्यां चंचुधृतं काष्ठखंडमेकं मया मुखेनावलम्ब्य गंतव्यं, युवयोः पक्षबलेन मयापि सुखेन गंतव्य । हंसौ ब्रूतः संभवत्येष उपायः किंतु ।

उपायं चिंतयन् प्राज्ञो ह्यपायमपि चिंतयेत् ।
पश्यतो बकमूर्खस्य नकुलै र्भक्षिताः प्रजाः ॥

कूर्मः पृच्छति कथमेतत्? तौ कथयतः, अस्त्युत्तरपथे गृध्रकूटनाम्नि पर्वते महान् पिप्पलवृक्षः तत्रानेकबका निवसंति, तस्य वृक्षस्याधस्थविवरे सर्पो बालापत्यानि खादति । अथ शोकार्त्तानां बकानां विलापं श्रुत्वा केनचिद्

बकेनाभिहितं, एवं न कुरुत यूयं मत्स्यमांसमादाय नकुलविवरादारभ्य सर्पविवरं यावत् पंक्तिक्रमेण विकिरत। ततस्तदाहारलुब्धै र्नकुलैरागत्य सर्पो दृष्टस्तैः स्वभावद्वेषाद् व्यापादयितव्यश्च, तथानुष्ठिते तद्वृत्तं। ततस्तत्र वृक्षे नकुलै र्बकशावकरावः श्रुतः पश्चात् ते वृक्षमारुह्य बकशावकान् खादितवन्तः। अत आवां ब्रूमः उपायं चिंतयन्नित्यादि। आवाभ्यां नीयमानं त्वामवलोक्य लोकैः किंचिद् वक्तव्यमेव। तदाकर्ण्य यदि त्वमुत्तरं दास्यसि तदा त्वन्मरणं तत् सर्वथात्रैव स्थीयतां। कूर्मो वदति, किमहमप्राज्ञः? नाहमुत्तरं दास्यामि किमपि न वक्तव्यं। तथानुष्ठिते तथाविधं कूर्ममालोक्य सर्वे गोरक्षकाः पश्चाद् धावंति वदंति च। कश्चिद् वदति यद्ययं कूर्मः पतति तदात्रैव पक्त्वा खादितव्यः; कश्चित् वदति अत्रैव दग्ध्वा खादितव्योऽयं; कश्चिद् वदति गृहं नीत्वा भक्षणीय इति तद्वचनं श्रुत्वा स कूर्मः कोपाविष्टो विस्मृतपूर्वसंस्कारः प्राह, युष्माभि र्भस्म भक्षितव्यमितिवदन्नेव पतितस्तै र्व्यापादितश्च; अतोऽहं ब्रवीमि, सुहृदां हितकामानामित्यादि। अथ प्रणिधि र्बकस्तत्रागत्य उवाच, देव प्रागेव मया निगदितं, दुर्गशोधनं हि प्रतिक्षणं कर्त्तव्यमिति तच्च युष्माभि र्न कृतं; तदनवधानस्य फलमनुभूतमिति दुर्गदाहो मेघवर्णेन वायसेन गृध्रप्रयुक्तेन कृतः। राजा निश्वस्याह।

प्रणयादुपकाराद् वा यो विश्वसिति शत्रुषु।
स सुप्तइव वृक्षाग्रात् पतितः प्रतिबुध्यते॥

प्रणिधिरुवाच, इतो दुर्गदाहं विधाय यदागतो मेघवर्ण स्तदा चित्रवर्णेन प्रसादितेनोक्तं अयं मेघवर्णोऽत्र कर्पूरद्वीपराज्येऽभिषिच्यतां।

तथा चोक्तं। कृतकृत्यस्य भृत्यस्य कृतं नैव प्रणाशयेत्।
फलेन मनसा वाचा दृष्ट्या चैनं प्रहर्षयेत्॥

चक्रवाको ब्रूते, ततस्ततः प्रणिधिरुवाच। ततः प्रधानमंत्रिणा गृध्रेणाभिहितं देव नेदमुचितं प्रसादांतरं किमपि क्रियतां।

यतः। अविचारयतो युक्तिकथनं तुषखंडनं।
नीचेषूपकृतं राजन् वालुकास्विव मूत्रितं॥

महतामास्पदं नीचः कदापि न कर्त्तव्यः ।

तथा चोक्तं। नीचः श्लाघ्यपदं प्राप्य स्वामिनं हंतुमिच्छति ।
मूषिको व्याघ्रतां प्राप्य मुनिं हंतुं गतो यथा ॥

चित्रवर्णः पृच्छति कथमेतत्? मंत्री कथयति, अस्ति गौतमस्य महर्षेस्तपोवने महातपानाम मुनिस्तत्र तेन मुनिना काकेन नीयमानो मूषिकशावको दृष्टः। ततः स्वभावदयात्मना तस्मान्मोचयित्वा नीवारकणैःसंवर्द्धितः ततोविडालस्तं मूषिकं खादितुमनुधावति तमवलोक्य मूषिकस्तस्य मुनेः क्रोडे प्रविवेश। ततोमुनिनोक्तं? मूषिक त्वं मार्जारो भव। ततः स विडालः कुक्कुरं दृष्ट्वा पलायते। ततोमुनिनोक्तं, कुक्कुराद् बिभेषि त्वमेव कुक्कुरो भव स च कुक्कुरो व्याघ्राद् बिभेति। ततस्तेन मुनिना कुक्कुरो व्याघ्रः कृतः। अथ तं व्याघ्रं मुनि र्मूषिकोऽय मिति पश्यति। अथ तं मुनिं दृष्ट्वा व्याघ्रंच सर्वे वदंति, अनेन मुनिना मूषिको व्याघ्रतां नीतः। एतच्छ्रुत्वा स व्याघ्रो ऽचिंतयत्, यावदनेन मुनिना स्थातव्यं तावदिदं मे स्वरूपाख्यानमकीर्तिकरं न पलायिष्यते, मूषिक इत्यालोच्य तं मुनिं हंतुं गतः। ततो मुनिना तज्ज्ञात्वा पुनर्मूषिको भव इत्युक्त्वा मूषिक एव कृतः। अतोऽहं ब्रवीमि, नीचः श्लाघ्यपदमित्यादि। अपरंच सुकरमिदमिति न मंतव्यं।

शृणु। भक्षयित्वा बहून् मत्स्यान् उत्तमाधममध्यमान् ।
अतिलोभाद् बकः पश्चात् मृतः कर्कटकग्रहात् ॥

चित्रवर्णः पृच्छति कथमेतत्? मंत्री कथयति, अस्ति मालवदेशे पद्मगर्भनामधेयं सरः, तत्रैको वृद्धो बकः सामर्थ्यहीन उद्विग्नमिवात्मानं दर्शयित्वा स्थितः। स च केनचित् कुलीरेण दृष्टः पृष्टश्च किमिति भवानत्राहारत्यागेन तिष्ठति? बकेनोक्तं, मत्स्या मम जीवनहेतवः ते कैवर्तैरागत्य व्यापादितव्या इति वार्त्ता नगरोपांते मया श्रुता; अतो वर्त्तनाभावादेवास्मन्मरणमुपस्थितमिति ज्ञात्वा आहारेप्यनादरः कृतः। ततो मत्स्यै रालोचितं, इह समये तावदुपकारकएवायं लक्ष्यते तदयमेव, यथा कर्त्तव्यं पृच्छतां।

तथा चोक्तं। उपकर्त्रारिणा संधिं न मित्रेणापकारिणा।
उपकारापकारौ हि लक्ष्यं लक्षणमेतयोः॥

मत्स्या ऊचुः। भो बक कोऽत्र रक्षणोपायः? बको ब्रूते, अस्ति रक्षणोपायः, जलाशयांतराश्रयणं तत्राहमेकैकशो युष्मान् नयामि। मत्स्या आहुरेवमस्तु, ततोऽसौ बकस्तान् मत्स्यानेकैकशो नीत्वा खादति। अनंतरं कुलीरस्तमुवाच भो बक मामपि तत्र नय; ततो बकोऽप्यपूर्वकुलीरमांसार्थी सादरं तं नीत्वा स्थले धृतवान्। कुलीरोऽपि मत्स्यकंटककीर्णं तत् स्थलमालोक्याचिंतयत्, हा हतोऽस्मि मन्दभाग्यः भवतु इदानीं समयोचितं व्यवहरिष्यामि।

यतः। तावद् भयाद् विभेतव्यं यावद् भयमनागतं।
आगतं तु भयं वीक्ष्य महर्तव्यमभीतवत्॥
अपरंच। अभियुक्तो यदा पश्येन्न किंचिद्धितमात्मनः।
युध्यमानस्तदा प्राज्ञो म्रियते रिपुणा सह॥
अन्यच्च। यत्रायुद्धे ध्रुवो मृत्यु युद्धे जीवितसंशयः।
तं कालमेकं युद्धस्य प्रवदंति मनीषिणः॥

इत्यालोच्य कुलीरस्तस्य ग्रीवां चिच्छेद, स बकः पंचत्वं गतः। अतोहं ब्रवीमि भक्षयित्वा बहून्मत्स्यानित्यादि। शृणु ततश्चित्रवर्णोऽवदत् मंत्रिन् तावत् मयैतदालोचितमस्ति, अत्रावस्थितेन मेघवर्णेन राजा यावंति वस्तूनि कर्पूरद्वीपस्योत्तमानि तावंत्यस्माकमुपनेतव्यानि तेनास्माभि र्महासुखेन विंध्याचले स्थातव्यं। दूरदर्शी विहस्याह देव।

अनागतवतीं चिंतां कृत्वा यस्तु महृष्यति।
स तिरस्कारमाप्नोति भग्नभांडो द्विजो यथा॥

राजाह, कथमेतत्? मंत्री कथयति, अस्ति देवीकोटरनाम्नि नगरे देवशर्मा नाम ब्राम्हणः, तेन महाविषुवसंक्रांत्यां सक्तुपूर्णशरावएकः प्राप्तः, तमादायासौ कुंभकारस्य भांडपूर्णमंडपैकदेशे रौद्रेणाकुलितः सुप्तः। ततः सक्तुरक्षार्थं हस्ते दंडैकम् आदायाचिंतयत्, यद्यहं सक्तुशरावं विक्रीय।

दशकपर्दकान् प्राप्स्यामि, तदानैव तैः कपर्दकैः घटशरावादिकमुपक्रीय अनेकधा वृद्धैस्तद्धनैः पुनः पुनः पूगवस्त्रादिकमुपक्रीय विक्रीय लक्षसंख्यानि धनानि कृत्वा विवाहचतुष्टयं करिष्यामि । अनंतरं तासु पत्नीषु रूपयौवनवती या तस्यामधिकानुरागं करिष्यामि, सपत्न्यो यदा द्वंद्वं करिष्यंति तदा कोपाकुलोऽहं तां लगुडेन ताडयिष्यामीत्यभिधाय लगुडः क्षिप्तः तेन सक्तुशरावश्चूर्णितो भांडानि च बहूनि भग्नानि । ततस्तेन शब्देनागतेन कुंभकारेण तथाविधानि भांडान्यवलोक्य ब्राम्हण स्तिरस्कृतो मंडपाद् वहिष्कृतश्च । अतोऽहं ब्रवीमि, अनागतवतीं चिंतामित्यादि । ततोराजा रहसि गृध्रमुवाच, तात यथाकर्त्तव्यं तथोपदिश गृध्रो ब्रूते ।

मदोद्धतस्य नृपतेः संकीर्णस्येव दंतिनः ।
गच्छंत्युन्मार्गयातस्य नेतारः खलु वाच्यतां ॥

शृणु देव किमस्माभि र्बलदर्पाद्दुर्गं भग्नं न किंतु तव प्रतापाधिष्ठितेन उपायेन । राजाह भवतामुपायेन । गृध्रो ब्रूते, यद्यस्मद्वचनं क्रियते तदा स्वदेशे गम्यतां, अन्यथा वर्षाकाले प्राप्ते पुनर्विग्रहे सत्यस्माकंपरभूमिष्ठानां स्वदेशगमनमपि दुर्लभं भविष्यति सुखशोभार्थं संधाय गम्यतां दुर्गं भग्नं कीर्त्तिश्च लब्धैव मम संमतं तावदेतत् ।

यतः । योहि धर्मं पुरस्कृत्य हित्वा भर्त्तुः प्रियाप्रिये ।
अप्रियाण्याह तथ्यानि तेन ताजा सहायवान् ॥
अन्यच्च । सुहृद् बलं तथा राज्यमात्मानं कीर्त्तिमेवच ।
युधि संदेहदोलास्थं कोहि कुर्यादबालिशः ॥
अपरंच । संधिमिच्छेत् समेनापि संदिग्धो विजयो युधि ।
सुंदोपसुंदावन्योन्यौ नष्टौ तुल्यबलौ न किं ॥

राजोवाच कथमेतत्? मंत्री कथयति पुरा दैत्यौ महोदारौ सुंदोपसुंदनामानौ महता क्लेशेन त्रैलोक्यकामनया चिराच्चंद्रशेखरमाराधितवंतौ । ततस्तयो र्भगवान् परितुष्टो वरं वृणोथामित्युवाच । अनंतरं तयोः समाधिष्ठितया सरस्वत्या तावन्यद्वक्तुकामौ अन्यदभिहितौ यद्यावयो र्भवान् परितुष्टस्तदा स्वप्रियां

पार्वती परमेश्वरो ददातु । अथ भगवता क्रुद्धेन वरदानस्यावश्यकतया विचारमूढयोः पार्वत्याइव निर्मायान्या स्त्री प्रदायि । ततस्तस्या अनुरूपलावण्यलुब्धाभ्यां जगद्घातिभ्यां मनसोत्सुकाभ्यां पापतिमिराभ्यां ममेत्यन्योन्यकलहाभ्यां प्रमाणपुरुषः कश्चित् पृच्छतामिति मतौ कृतायां । सएव भट्टारको वृद्धद्विजरूपः समागत्य तत्रोपस्थितः । अनंतरम् आवाभ्यामियं स्वबललब्धा कस्येयमावयो र्भवति ब्राम्हणमपृच्छतां । ब्राम्हणो ब्रूते ।

वर्णश्रेष्ठो द्विजः पूज्यः क्षत्रियोबलवानपि ।
धनधान्याधिको वैश्यः शूद्रस्तु द्विजसेवया ॥

तत् युवां क्षत्रधर्मानुगौ, युद्धएव युवयोर्नियमः इत्यभिहिते सति साधूक्तमनेनेति कृत्वा अन्योन्यतुल्यवीर्यौ समकालमन्योन्यघातेन विनाशमुपगतौ । अतोऽहं ब्रवीमि संधिमिच्छेत् समेनापीत्यादि । राजाह, प्रागेव किं नोक्तं भवद्भिः? मंत्री ब्रूते मद्वचनं किमवसानपर्यंतं श्रुतं भवद्भिः? तथापि मम संमत्या नायं विग्रहारंभः साधुगुणयुक्तोयं हिरण्यगर्भः न विग्राह्यः ।

तथाचोक्तं।सत्यार्यौ धार्मिकोऽनार्यो भ्रातृसंघातवान् बली ।
अनेकयुद्धविजयी संधेयाः सप्त कीर्तिताः ॥
सत्योनुपालयेत् सत्यं संधितो नैति विक्रियां ।
प्राणबाधेपि सुव्यक्तमार्यो नायात्यनार्य्यतां ॥
धार्मिकस्याभियुक्तस्य सर्वएव हि पूज्यते ।
प्रजानुरागाद् धर्माच्च दुःखोच्छेद्यो हि धार्मिकः ॥
संधिः कार्योप्यनार्येण विनाशे समुपस्थिते ।
विना तस्याश्रयेणान्यः कुर्यात् न कालयापनं ॥
संहतत्वाद् यथा वेणु र्निबिडः कंटकै र्वृतः ।
न शक्यते समुच्छेत्तुं भ्रातृसंघातवांस्तथा ॥
बलिना सह योद्धव्यमिति नास्ति निदर्शनं ।
प्रतिवातं नहि घनः कदाचिदुपसर्पति ॥
जमदग्नेः सुतस्येव सर्वः सर्वत्र सर्वदा ।
अनेकयुद्धजयिनः प्रतापादेव भुज्यते ॥

अनेकयुद्धविजयी संधानं यस्य गच्छति ।
तत् प्रतापेन तस्याशु वशमायाति शत्रवः ॥

तत्र तावद् बहुभि र्गुणैरुपेतः संधेयोऽयं राजा । चक्रवाकोऽवदत् , प्रणिधे सर्वत्र व्रज, गत्वा पुनरागमिष्यसि । राजा चक्रवाकं पृष्टवान् मंत्रिन् असंधेयाः कति? तान् श्रोतुमिच्छामि । मंत्री ब्रूते, देव कथयामि शृणु ।

बालो वृद्धो दीर्घरोगी तथा ज्ञातिबहिष्कृतः ।
भीरुको भीरुजनको लुब्धो लुब्धजनस्तथा ॥
विरक्तप्रकृतिश्चैव विषयेष्वतिसक्तिमान् ।
अनेकचित्तमंत्रस्तु देवब्राम्हणनिंदकः ॥
दैवोपहतकश्चैव तथा दैवपरायणः ।
दुर्भिक्षव्यसनोपेतो बहुव्यसनसंकुलः ॥
अदेशस्थो बहुरिपु र्युक्तः कालेन यश्च न ॥
सत्यधर्मव्यपेतश्च विंशतिः पुरुषा अमी ॥
एतैः संधिं न कुर्वीत विगृह्हीयात् तु केवलं ।
एते विगृह्यमाणा हि क्षिप्रं यांति रिपो र्वशं ॥
बालस्याल्पप्रभावत्वान् न लोको योद्धुमिच्छति ।
युद्धायुद्धफलं यस्मात् ज्ञातुं शक्तो न बालिशः ॥
उत्साहशक्तिहीनत्वाद् वृद्धो दीर्घामयस्तथा ।
स्वैरेव परिभूयेते द्वावप्येतावसंशयं ॥
सुखोच्छेद्यो हि भवति सर्वज्ञातिबहिष्कृतः ।
तं ज्ञातयो विनिघ्नंति ज्ञातयस्त्वात्मसात् कृताः ॥
भीरु र्युद्धपरित्यागात् स्वयमेव प्रणश्यति ।
भीरुको भीरुपुरुषैः संग्रामे तै र्विमुच्यते ॥
लुब्धस्यासंविभागित्वान् न युध्यंते ऽनुयायिनः ॥
लुब्धानुजीविभिस्तैरेव दानभिन्नै र्निहन्यते ॥
संत्यज्यते प्रकृतिभि र्विरक्तप्रकृति र्युधि ।
सुखाभियोज्यो भवति विषयेष्वतिसक्तिमान् ॥

अनेकचित्तमंत्रस्तु भेद्यो भवति मंत्रिणा।
अनवस्थितचित्तत्वात् कार्यतः स उपेक्ष्यते॥
संपत्तेश्च विपत्तेश्च दैवमेव हि कारणं।
इतिदैवपरोध्यायन् नात्मानमपि चेष्टते॥
दुर्भिक्षव्यसनी चैव स्वयमेव विषीदति।
वहुव्यसनयुक्तस्य मंत्रशक्ति र्न जायते॥
सदाऽधर्मवलीयस्त्वाद् देवब्राम्हण निंदकः।
विशीर्यते स्वयं ह्येष दैवोपहतकस्तथा॥
अदेशस्थो हि रिपुणा स्वल्पकेनापि हन्यते।
ग्राहोल्पीयानपि जले गजेंद्रमपि कर्षति॥
वहुशत्रुस्तु संत्रस्तः श्येनमध्ये कपोतवत्।
येनैव गच्छति पथा तेनैवाशु विपद्यते॥
अकालसैन्ययुक्तस्तु हन्यते कालयोधिना॥
कौशिकेन हतज्योति निंशीथ इव वायसः।
सत्यधर्मव्यपेतेन संदध्यान् न कदाचन।
ससंधितोप्यसाधुत्वादचिराद् याति विक्रियां॥

अपरमपि कथयामि संधिविग्रहयानासनसंश्रयद्वैधीभावाः षाड्गुण्यं कर्मणामारंभोपायः। पुरुषस्वे द्रव्यसंपद् देशकालविभागोऽरिनिपातः प्रतीकारः कार्यसिद्धिश्च पंचांगोमंत्रः। सामदानभेददंडाश्चत्वार उपायाः उत्साहशक्ति-मंत्रशक्तिप्रभुशक्तिश्च इति शक्तित्रयं। एतत् सर्वमालोच्य नित्यविजिगीषवो भवंति महांतः।

या हि प्राणपरित्यागमूल्येनापि न लभ्यते।
सा श्री नीतिविदां पश्य चंचलापि प्रधावति॥

तथा चोक्तं। वित्तं यदा सस्य समं विभक्तं,
गूढश्चरः संनिभृतश्च मंत्रः।
न चाप्रियं प्राणिषु यो ब्रवीति,
स सागरांतां पृथिवीं प्रशास्ति॥

किंतु यद्यपि महामंत्रिणा गृध्रेण संधानमुपन्यस्तं तथापि भूतजयदर्पान्नावमंतव्यं । देव तदेवं क्रियतां सिंहलद्वीपस्य महाबलो नाम सारसो राजास्मन्मित्रं जंबुद्वीपे पश्चात् कोपं जनयतु ।

यतः । सुगुप्तमाधाय सुसंहतेन बलेन वीरो विचरन्नरातिं ।
सन्तापयेद् येन समं सुतप्तस्तप्तेन संधानमुपैति तप्तः ॥

राजा एवमस्तु इति निगद्य विचित्रनामबकः सुगुप्तलेखं दत्वा सिंहलद्वीपं प्रहितः । अथ प्रणिधिरागत्य उवाच देव श्रूयतां तत्रत्यप्रस्तावः एवं तत्र गृध्रेणोक्तं । यद्देव मेघवर्णस्तत्रचिरमुषितः स वेत्ति किं संधेयगुणयुक्तो हिरण्यगर्भो नवेति । ततोऽसौ राज्ञा समाहूय पृष्टः वायस कीदृशोऽसौ हिरण्यगर्भश्चक्रवाको मंत्री वा कीदृशः । वायस उवाच देव हिरण्यगर्भो राजा युधिष्ठिरसमो महाशयः चक्रवाकसमो मंत्री न क्वाप्यवलोक्यते । राजाह यद्येवं तदा कथमसौ त्वया वंचितः? विहस्य मेघवर्णः प्राह देव ।

विश्वासप्रतिपन्नानां वंचने का विदग्धता ।
अंकमारुह्य सुप्तंहि हत्वा किं नाम पौरुषं ॥

शृणु देव तेन मंत्रिणाहं प्रथमदर्शन एव ज्ञातः किंतु महाशयोऽसौ राजा तेन मया विप्रलब्धः ।

तथा चोक्तं । आत्मौपम्येन यो वेत्ति दुर्ज्जनं सत्यवादिनं ।
स तथा वंच्यते धूर्तै र्ब्राम्हणश्छागलो यथा ॥

राजोवाच कथमेतत्? मेघवर्णः कथयति । अस्ति गौतमस्यारण्ये प्रस्तुतयज्ञः कश्चित् ब्राम्हणः स च यज्ञार्थं ग्रामांतराच्छागम् उपक्रीय स्कंधे नीत्वा गच्छन् धूर्त्तत्रयेणावलोकितः । ततस्ते धूर्ताः यद्येष छागः केनाप्युपायेन लभ्यते तदा मतिप्रकर्षो भवति समालोच्य वृक्षत्रयतले क्रोशांतरेण तस्य ब्राम्हणस्यागमनं प्रतीक्ष्य पथि स्थिताः । तत्रैकेन धूर्त्तेन गच्छन् स ब्राम्हणोऽभिहितः भो ब्राम्हण किमिति कुक्कुरः स्कंधेन उह्यते? विप्रेणोक्तं नायं श्वा किंतु यज्ञच्छागः । अथानंतरं स्थितेनान्येन धूर्तेन तथैवोक्तं तदाकर्ण्य ब्राम्हणश्छागं भूमौ निधाय मुहुर्निरीक्ष्य पुनः स्कंधे कृत्वा दोलायमानमतिश्चलितः ।

यतः। मति र्दोलायते सत्यं सतामपि खलोक्तिभिः।
त्रिभि र्विश्वासितश्चासौ म्रियते चित्रकर्णवत् ॥

राजाह कथमेतत्? स कथयति, अस्ति कस्मिंश्चिद् वनोद्देशे मदोत्कटो नाम सिंहः, तस्य सेवकास्त्रयः काकोव्याघ्रो जंबुकश्च अथ ते भ्रमद्भिः कश्चिदुष्ट्रो दृष्टः पृष्टश्च कुतोभवानागतः सार्थाद् भ्रष्टः? स चात्मवृत्तांतमकथयत्। ततस्तै र्नीत्वा सिंहेऽसौ समर्पितः। तेनाभयवाचं दत्त्वा चित्रकर्ण इति नाम कृत्वा स्थापितः। अथ कदाचित् सिंहस्य शरीरवैकल्यात् भूरिवृष्टिकारणात् चाहारम् अलभमानास्ते व्यग्रा बभूवुः। ततस्तैरालोचितं चित्रकर्णमेव यथा स्वामी व्यापादयति तथानुष्ठीयतां किमनेन कंटकभुजा? व्याघ्र उवाच स्वामिनाभयवाचं दत्त्वा अनुगृहीतस्तत् कथमेवं संभवति। काको ब्रूते, इहसमये परिक्षीणः स्वामी पापमपि करिष्यति।

यतः। त्यजेत् क्षुधार्त्तो महिला स्वपुत्रं,
खादेत् क्षुधार्त्ता भुजगी स्वमंडं।
बुभुक्षितः किं न करोति पापं,
क्षीणा नरा निष्करुणा भवंति ॥

अन्यच्च। मत्तः प्रमत्तश्चोन्मत्तः श्रांतः क्रुद्धो बुभुक्षितः।
लुब्धो भीरुस्त्वरायुक्तः कामुकश्च न धर्मवित् ॥

इति संचिंत्य सर्वे सिंहांतिकं जग्मुः। सिंहेनोक्तं आहारार्थं किंचित् प्राप्तं? तैरुक्तं यत्नादपि न प्राप्तं किंचित्। सिंहेनोक्तं कोऽधुना जीवनोपायः? काको वदति देव स्वाधीनाहारपरित्यागात् सर्वनाशोऽयमुपस्थितः। सिंहेनोक्तं अत्राहारः कः स्वाधीनः? काकः कर्णे कथयति चित्रकर्ण इति। सिंहो भूमिं स्पृष्ट्वा कर्णौ स्पृशति, अभयवाचं दत्त्वा धृतोऽयमस्माभिः? तत् कथमेवं संभवति?

तथा च। न भूप्रदानं न सुवर्णदानं न गोप्रदानं न तथान्नदानं।
यथा वदंतीह महाप्रदानं सर्वेषु दानेष्वभयप्रदानं ॥

अन्यच्च। सर्वकामसमृद्धस्य अश्वमेधस्य यत् फलं।
तत् फलं लभते सम्यक् रक्षिते शरणागते ॥

काको ब्रूते, नासौ स्वामिना व्यापादयितव्यः किंत्वस्माभिरेव तथा कर्त्तव्यं यथासोस्वदेहदानमंगीकरोति । सिंहस्तत् श्रुत्वा तूष्णीं स्थितः । ततो लब्धावकाशः कूटं कृत्वा सर्वानादाय सिंहांतिकं गतः । अथ काकेनोक्तं देव यत्नादप्याहारो न प्राप्तः अनेकोपवासखिन्नः स्वामी तदिदानीं मदीय-मांसमुपभुज्यतां ।

यतः । प्रकृतिः स्वामिना त्यक्ता समृद्धापि न जीवति ।
अपि धन्वंतरि र्वैद्यः किं करोति गतायुषः ॥
किंच । स्वामिमूला भवंत्येव सर्वाः प्रकृतयः खलु ।
समूलेष्वपि वृक्षेषु प्रयत्नः सफलो नृणां ॥

सिंहेनोक्तं वरं प्राणपरित्यागो न पुनरीदृशि कर्मणि प्रवृत्तिः । जंबुकेनापि तथोक्तं । ततः सिंहेनोक्तं मैवं । अथ व्याघ्रेणोक्तं मद्देहेन जीवतु स्वामी । सिंहेनोक्तं न कदाचिदेवमुचितं । अथ चित्रकर्णोपि जातविश्वासस्तथैवात्मा-नमाह तत स्तद्वचनात् तेन व्याघ्रेणासौकुक्षिं विदार्य व्यापादितः सर्वैर्भक्षितश्च । अतोऽहंब्रवीमि मतिर्दोलायते सत्यमित्यादि । ततः तृतीयधूर्त्तवचनं श्रुत्वा स्वमतिभ्रमं निश्चित्य छागं त्यक्त्वा ब्राम्हणः स्नात्वा गृहं ययौ । स छागस्तै धूर्त्तै र्नीत्वा भक्षितः । अतोहं ब्रवीमि आत्मौपम्येन यो वेत्तीत्यादि । राजाह, मेघवर्ण कथं शत्रुमध्ये त्वया चिरमुषितं? कथं वा तेषामनुनयः कृतः? मेघवर्ण उवाच देव स्वामिकार्यार्थिना स्वप्रयोजनवशाद्वा किं न क्रियते?

पश्य । लोको वहति किं राजन् शिरसा दग्धुमिंधनं ।
क्षालयन्नपि वृक्षांघ्रिं नदी वेला निकृंतति ॥
तथा चोक्तं। स्कंधेनापि वहेत् शत्रून् कार्यमासाद्य बुद्धिमान् ।
यथा वृद्धेन सर्पेण मंडूका विनिपातिताः ॥

राजाह, कथमेतत्? मेघवर्णः कथयति, अस्ति जीर्णोद्याने मंदविषनामा सर्पः सोतिजीर्णतया आहारमप्यन्वेष्टुमक्षमः सरस्तीरे पतित्वा स्थितः । ततो दूरादेव केनचित् मंडूकेन दृष्टः पृष्टश्च किमिति त्वमाहारंनान्विच्छसि? सर्पोऽवदत् गच्छ, भद्र मम मंदभाग्यस्य प्रश्नेन किं? ततः संजातकौतुकः स च भेकः

सर्वथा कथ्यतामित्याह । सर्पोप्याह भद्र ब्रम्हपुरवासिनः श्रोत्रियस्य कौंडिन्यस्य पुत्रो विंशतिवर्षीयः सर्वगुणसंपन्नः दुर्दैवात् मम नृशंसस्वभावात् मया दष्टः । तं पुत्रं सुशीलनामानं मृतमालोक्य मूर्च्छितः कौंडिन्यः पृथिव्यां लुलोठ । अनंतरं ब्रम्हपुरवासिनः सर्वे बांधवास्तत्रागत्य उपविष्टाः ।

तथाचोक्तं। उत्सवे व्यसने युद्धे दुर्भिक्षे राष्ट्रविप्लवे ।
राजद्वारे श्मशानेच यस्तिष्टति स बांधवः ॥

तत्र कपिलोनाम स्नातकोऽवदत्, अरे कौंडिन्य मूढोसि तेनैवं विलपसि ?

शृणु । क्रोडी करोति प्रथमं यथा जातमनित्यता ।
धात्रीव जननी पश्चात् तथा शोकस्य कः क्रमः ॥
तथा । क्व गताः पृथिवीपालाः सामात्यबलवाहनाः ।
वियोगसाक्षिणी येषां भूमिरद्यापि तिष्टति ॥
अपरंच । कायः सन्निहितापायः संपदः पदमापदां ।
समागमाः सापगमाः सर्वमुत्यादि भंगुरं ॥
प्रतिक्षणमयं कायः क्षीयमाणो न लक्ष्यते ॥
आमकुंभइवांभस्थो विशीर्णः सन् विभाव्यते ॥
आसन्नतरतामेति मृत्यु र्जंतो र्दिने दिने ।
आघातं नीयमानस्य वध्यस्येव पदे पदे ॥
अनित्यं यौवनं रूपं जीवितं द्रव्यसंचयः ।
ऐश्वर्यं प्रियसंभाषो मुह्येत् तत्र न पंडितः ॥
यथा काष्ठंच काष्ठंच समेयातां महोदधौ ।
समेत्य च व्यपेयातां तद्वत् भूतसमागमः ॥
यथा हि पथिकः कश्चिच्छायामाश्रित्य तिष्ठति ।
विश्रम्य च पुनर्गच्छेत् तद्वत् भूतसमागमः ॥
अन्यच्च। पंचभि र्निर्मिते देहे पंचत्वंच पुनर्गते ।
स्वां स्वां योनिमनुप्राप्ते तत्र का परिवेदना ॥
यावतः कुरुते जंतुः संबंधान् मनसः प्रियान् ।

तावंतोऽपि विलिख्यंते हृदये शोकशंकवः ॥
नायमत्यंतसंवासो लभ्यते येन केनचित् ।
अपि स्वेन शरीरेण किमुतान्येन केनचित् ॥

अपिच । संयोगो हि वियोगस्य संसूचयति संभवं ।
अनतिक्रमणीयस्य जन्ममृत्योरिवागमं ॥
आपातरमणीयानां संयोगानां प्रियैः सह ॥
अपथ्यानामिवान्नानां परिणामोऽतिदारुणः ॥

अपरंच । व्रजंति न निवर्त्तंते स्रोतांसि सरितां यथा ।
आयुरादाय मर्त्यानां तथा रात्र्यहनी सदा ॥
सुखास्वादपरो यस्तु संसारे सत्समागमः ।
सवियोगावसानत्वात् दुःखानां धुरि युज्यते ॥
अतएव हि नेच्छंति साधवः सत्समागमं ।
यद् वियोगासिलूनस्य मनसो नास्ति भेषजं ॥
सुकृतान्यपि कर्माणि राजभिः सगरादिभिः ।
अथ तान्येव कर्माणि तेचापि प्रलयं गताः ।
संचिंत्य संचिंत्य तमुग्रदंडं मृत्युं मनुष्यस्य विचक्षणस्य ।
वर्षांबुसिक्ता इव चर्मबंधाः सर्वप्रयत्नाः शिथिलीभवंति ॥
यामेव रात्रिं प्रथमा मुपैति गर्भे निवासी नरवीरलोकः ।
ततः प्रभृत्यस्खलितप्रयासः स प्रत्यहं मृत्युसमीपमेति ॥

अतः संसारं विचारय शोकोऽयमज्ञानस्य प्रपंचः ।

पश्य । अज्ञानं कारणं न स्याद् वियोगो यदि कारणं ।
शोको दिनेषु गच्छत्सु वर्द्धतामपयाति किं ॥

तदत्रात्मानम् अनुसंधेहि शोकचर्चां परिहर ।

यतः । अकांडपातजातानामस्त्राणां मर्मभेदिनां ।
गाढशोकप्रहाराणामचिंतैव महौषधं ॥

ततस्तद् वचनं निशम्य प्रबुद्ध इव कौंडिन्य उत्थायाब्रवीत् तदलमिदानीं गृहनरकवासेन वनमेव गच्छामि कपिलः पुनराह ।

वनेपि दोषाः प्रभवंति रागिणां,
गृहेऽपि पंचेंद्रियनिग्रहस्तपः ।
अकुत्सिते कर्मणि यः प्रवर्त्तते,
निवृत्तरागस्य गृहं तपोवनं ॥

यतः । दुःखितोपि चरेद् धर्मं यत्र कुत्राश्रमे रतः ।
समः सर्वेषु भूतेषु न लिंगं धर्मकारणं ॥

उक्तंच । वृत्यर्थं भोजनं येषां संतानार्थंच मैथुनं ।
वाक् सत्यवचनार्थाय दुर्गाण्यपि तरंति ते ॥

तथाहि । आत्मा नदी संयमपुण्यतीर्था,
सत्योदका शीलतटादयोर्मिः,
तत्राभिषेकं कुरु पांडुपुत्र,
न वारिणा शुद्ध्यति चांतरात्मा ॥

विशेषतश्च। जन्ममृत्युजराव्याधिवेदनाभिरुपद्रुतं ।
संसारमिदमुत्पन्नमसारं त्यजतः सुखं ॥

यतः । दुःखमेवास्ति न सुखं यस्मात् तदुपलक्ष्यते ।
दुःखार्त्तस्य प्रतीकारे सुखसंज्ञा विधीयते ॥

कौडिन्यो ब्रूते, एवमेव । ततोऽहं तेन शोकाकुलेन ब्राम्हणेन शप्तः यदद्यारभ्य मंडूकानां वाहनं भविष्यसीति । कपिलो ब्रूते संप्रत्युपदेशासहिष्णुर्भवान् शोकाविष्टं ते हृदयं तथापि कार्यं शृणु ।

संगः सर्वात्मना त्याज्यः स च त्यक्तुं न शक्यते ।
स सद्भिः सह कर्तव्यः सतां संगोहि भेषजं ॥

अन्यच्च। कामः सर्वात्मना हेयः स चेद्धातुं न शक्यते ।
स्वभार्यां प्रति कर्त्तव्यः सैव तस्य हि भेषजं ॥

एतच्छ्रुत्वा स कौंडिन्यः कपिलोपदेशामृतप्रशांतशोकानलो यथाविधि दंडग्रहणं कृतवान्। अतो ब्राम्हणशापात् मंडूकान् वोढुमत्र तिष्ठामि। अनंतरं तेन मंडूकेन गत्वा मंडूकनाथस्य जनपदनाम्नोऽग्रे तत् कथितं; ततोसावागत्य मंडूकनाथस्तस्य सर्पस्य पृष्टमारूढवान्, स च सर्पस्तं पृष्टे कृत्वा चित्रपदक्रमं बभ्राम। परेद्युश्चलितुमसमर्थं तं मंडूकनाथोऽवदत्, किमद्य भवान् मंदगतिः? सर्पो ब्रूते, देव आहारविरहादसमर्थोस्मि। मंडूकनाथोऽवदत् अस्मदाज्ञया मंडूकान् भक्षय, ततोगृहीतोऽयं महाप्रसाद इत्युक्त्वा क्रमशो मंडूकान् खादितवान्। अथ निर्मंडूकं सरो विलोक्य मंडूकनाथोऽपि तेन खादितः। अतोऽहं ब्रवीमि स्कंधेनापि वहेच्छत्रूनित्यादि। देव यात्विदानीं पुरावृत्ताख्यानकथनं; सर्वथा संधेयोऽयं हिरण्यगर्भो राजा संधीयतामिति मे मतिः। राजोवाच, कोऽयं भवतोविचारः? यतो जितस्तावदयमस्माभिः ततो यद्यस्मत्सेवया वसति, तदास्तां नोचेद् विगृह्यतां। अत्रांतरे जंबुद्वीपादागत्य शुकेनोक्तं देव सिंहलद्वीपस्य सारसो राजा संप्रति जंबुद्वीपमाक्रम्यावतिष्ठते। राजा ससंभ्रमं ब्रूते किं किं? शुकः पूर्वोक्तं कथयति। गृध्रः स्वगतमुवाच साधु रे चक्रवाक मंत्रिन् सर्वज्ञ साधु साधु। राजा सकोपमाह आस्तां तावदयं, गत्वा तमेव समूलमुन्मूलयामि। दूरदर्शी विहस्याह।

न शरन्मेघवत् कार्यं वृथैव घनगर्जितं।
परस्यार्थमनर्थंवा प्रकाशयति नो महान्।

अपरंच। एकदा न विगृह्णीयात् बहून् राजाभिघातिनः।
सदर्पोप्युरगः कीटै र्बहुभि र्नाश्यते ध्रुवं॥

देव किमिति विना संधानं गमनमस्ति? यतस्तदास्मत् पश्चात् प्रकोपोऽनेन कर्त्तव्यः।

अपरंच। योऽर्थतत्वमविज्ञाय क्रोधस्यैव वशं गतः।
स तथा तप्यते मूढो ब्राम्हणो नकुलाद् यथा।

राजाह कथमेतत्? दूरदर्शी कथयति, अस्त्युज्जयिन्यां माधवो नाम विप्रः, तस्य ब्राम्हणी प्रसूताबालापत्यस्य रक्षार्थं ब्राम्हणमवस्थाप्य स्नातुं गता।

अथ ब्राम्हणाय राज्ञः पार्वणश्राद्धं दातुमाव्हानमागतं, तच्छ्रुत्वा ब्राम्हणः सहजदारिद्रादचिंतयत् यदि सत्वरं न गच्छामि तदान्यः कश्चित् श्रुत्वा श्राद्धं ग्रहिष्यति ।

यतः । आदानस्य प्रदानस्य कर्त्तव्यस्य च कर्मणः ।
क्षिप्रमक्रियमाणस्य कालः पिबति तद्रसं ॥

किंतु बालकस्यात्र रक्षको नास्ति, तत् किं करोमि यत्तु चिरकालपालितमिमं नकुलं पुत्रनिर्विशेषं बालकरक्षायां व्यवस्थाप्य गच्छामि; तथा कृत्वा गतः । ततस्तेन नकुलेन बालकसमीपमागच्छन् कृष्णसर्पोदृष्ट्वा व्यापाद्य कोपात् खंड खंडं कृत्वा खादितः । ततोऽसौ नकुलो ब्राम्हणमायांतम् अवलोक्य रक्तविलिप्तमुखपादः सत्वरमुपागम्य तच्चरणयो र्लुलोठ । ततः स विप्रस्तथाविधं तं दृष्ट्वा बालकोऽनेन खादित इत्यवधार्य नकुलं व्यापादितवान् । अनंतरं यावदुपसृत्यापत्यं पश्यति ब्राम्हणः, तावद् बालकः सुस्थः सर्पश्च व्यापादितस्तिष्ठति । ततस्तमुपकारकं नकुलं निरीक्ष्य भावितचेताः संतप्तः स परं विषादं अगमत् अतोहं ब्रवीमि योऽर्थतत्वमविज्ञाय इत्यादि ।

अपरंच । कामः क्रोधस्तथा मोहो लोभो मानो मदस्तथा ।
षड्वर्गमुत्सृजेदेनम् अस्मिंस्त्यक्ते सुखी नृपः ॥

राजाह मंत्रिन् एष ते निश्चयः? मंत्री ब्रूते एवमेव ।

यतः । स्मृतिश्च परमार्थेषु वितर्कौ ज्ञाननिश्चयः ।
दृढता मंत्रगुप्तिश्च मंत्रिणः परमो गुणः ॥

तथा च । सहसाविदधीत न क्रियाम् अविवेकः परमापदां पदं ।
वृणते हि विमृश्य कारिणं गुणलुब्धाः स्वयमेव संपदः ॥

तद्देव यदीदानीम् अस्मद् वचनं क्रियते तदा संधाय गम्यतां ।

यतः । यद्यप्युपायाश्चत्वारो निर्दिष्टाः साध्यसाधने ।
संख्यामात्रं फलं तेषां सिद्धिः साम्नि व्यवस्थिता ॥

राजाह कथमेवं संभवति ? मंत्री ब्रूते देव सत्वरं भविष्यति ।

यतः । मृद्घटवत् सुखभेद्यो दुःसंधानश्च दुर्जनो भवति ।
सुजनस्तु कनकघटवत् दुर्भेद्यश्चाशुसंधेयः ॥

अपरंच । अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः ।
ज्ञानलवदुर्विदग्धं ब्रम्हापि तं नरं न रंजयति ॥

विशेषतश्चायं धर्मज्ञो राजा सर्वज्ञो मंत्री च । ज्ञातमेतन् मया पूर्वं मेघवर्णवचनात् तत् कृतकार्यसंदर्शनाच्च ।

यतः । कर्मानुमेयाः सर्वत्र परोक्षे गुणवृत्तयः ।
तस्मात् परोक्षवृत्तानां फलैः कर्मानुभाव्यते ॥

राजाह, अलमुत्तरोत्तरेण यथाभिप्रेतमनुष्ठीयतां । एतन्मंत्रयित्वा गृध्रो महामंत्री तत्र यथार्हं कर्त्तव्यमित्युक्त्वा दुर्गाभ्यंतरं चलितः । ततः प्रणिधिबकेनागत्य राज्ञो हिरण्यगर्भस्य निवेदितं, देव संधिं कर्तुं महामंत्री गृध्रोऽस्मत् समीपमागच्छति । राजहंसो ब्रूते मंत्रिन् पुनः संधिना केनचिदत्रागंतव्यं । सर्वज्ञो विहस्याह देव न शंकास्पदमेतत् , यतोसौ महाशयो दूरदर्शी अथवा स्थितिरियं मंदमतीनां कदाचित् शंकैव न क्रियते ।

तथा हि । सरसि बहुशस्ताराच्छाये क्षणात् परिवंचितः ।
कुमुदविटपान्वेषी हंसो निशासु विचक्षणः ॥
न दशति पुनस्ताराशंकी दिवापि सितोत्पलं ।
कुहकचकितोलोकः सत्येप्यपायमपेक्षते ॥
दुर्ज्जनदूषितमनसः सुजनेष्वपि नास्ति विश्वासः ।
बालः पायसदग्धो दध्यपि फूत्कृतं भुंक्ते ॥

तद् देव यथाशक्ति तत्पूजार्थं रत्नोपहारादि सामग्री सुसज्जीक्रियतां, तथानुष्ठिते सति स गृध्रोमंत्री दुर्गद्वाराच्चक्रवाकेण उपगम्य सत्कृत्यानीय राजदर्शनं कारितो दत्तासने चोपविष्टः । चक्रवाक उवाच युष्मदायत्तं सर्वं स्वेच्छयोपभुज्यतामिदं राज्यं । राजहंसो ब्रूते, एवमेवं । दूरदर्शी कथयति एवमेवैतत् किन्त्विदानीं बहु प्रपंचवचनं निष्प्रयोजनं ।

यतः । [illegible] ।
[illegible] ॥
अन्यच्च । [illegible] ।
[illegible] ॥

तदिदानीं संधानं [illegible] । [illegible] संधानकार्यं [illegible] । [illegible] ब्रूते कति प्रकाराः संधीनां संभवन्ति ? गृध्रो ब्रूते कथयामि श्रूयताम् ।

बलीयसाभियुक्तस्तु नृपो नान्यप्रतिक्रियः ।
आपन्नः संधिमन्विच्छेत् कुर्वाणः कालयापनं ॥
कपाल उपहारश्च संतानः संगतस्तथा ।
उपन्यासः प्रतीकारः संयोगः पुरुषान्तरः ॥
अदृष्टनर आदिष्ट आत्मादिष्ट उपग्रहः ।
परिक्रमस्तथोच्छिन्नस्तथा च परभूषणः ॥
स्कंधोपनेयः संधिश्च षोडशैते प्रकीर्तिताः ।
इति षोडशकं प्राहुः संधिं संधिविचक्षणाः ॥
कपालसंधि र्विज्ञेयः केवलं समसंधितः ।
संप्रदानाद् भवति य उपहारः स उच्यते ॥
संतानसंधि र्विज्ञेयो दारिकादानपूर्वकः ।
सद्भिस्तु संगतः संधि र्मैत्रीपूर्व उदाहृतः ॥
यावदायुःप्रमाणस्तु समानार्थप्रयोजनं ।
संपत्तौ वा विपत्तौ वा कारणै र्यो न भिद्यते ॥
गतः संधिरेवायं प्रकृष्टत्वात् सुवर्णवत् ।
तथान्यैः संधिकुशलैः कांचनः स उदाहृतः ॥
द्रव्यात्मकार्यं सिद्धिं तु समुद्दिश्य क्रियेत यः ।
स उपन्यासकुशलैरुपन्यास उदाहृतः ॥
मयास्योपकृतं पूर्वं ममाप्येष करिष्यति ।
इति यः क्रियते संधिः प्रतीकारः स उच्यते ॥

अन्यच्च। उपकारं करोम्यस्य ममाप्येष करिष्यति।
अयंचापि प्रतीकारो रामसुग्रीवयोरिव॥
एकार्थां सम्यगुद्दिश्य क्रियां यत्र हि गच्छति।
समं हि तत्प्रमाणेन स च संयोग उच्यते॥
आवयो र्योधमुख्यैस्तु मदर्थः साध्यतामिति।
यस्मिन् पणस्तु क्रियते स संधिः पुरुषांतरः॥
त्वयैकेन मदीयोऽर्थः संप्रसाध्यस्त्वसाविति।
यत्र शत्रुः पणं कुर्यात् सोऽदृष्टपुरुषः स्मृतः॥
यत्र भूम्येकदेशेन पणेन रिपुर्वर्जितः।
संधीयते संधिविद्भिः सचादिष्ट उदाहृतः॥
स्वसैन्येन तु संधानमात्मादिष्ट उदाहृतः।
क्रियते प्राणरक्षार्थं सर्वदानादुपग्रहः॥
कोशांशेनार्द्धकोशेन सर्वकोशेन वा पुनः।
शिष्टस्य प्रतिरक्षार्थं परिक्रय उदाहृतः॥
भुवां सारवतीनांतु दानादुच्छन्न उच्यते।
भूम्युत्थफलदानेन सर्वेण परभूषणः॥
परिच्छिन्नं फलं यत्र प्रतिस्कंधेन दीयते।
स्कंधोपनेयं तं प्राहुः संधिं संधिविचक्षणाः॥
परस्परोपकारस्तु मैत्री संबंधकस्तथा।
उपहारश्च विज्ञेयाश्चत्वारश्चैव संधयः॥
एक एवोपहारस्तु संधिरेव मतो मम।
उपहारविभेदास्तु सर्वे मैत्रविवर्जिताः॥
अभियोक्ता बलीयस्त्वादलब्ध्वा न निवर्त्तते।
उपहारादृते तस्मात् संधिरन्यो न विद्यते॥

चक्रवाक उवाच।

अयं निजः परोवेति गणना लघुचेतसां।
उदारचरितानांतु वसुधैव कुटुंबकं॥
अपरंच। मातृवत् परदारेषु परद्रव्येषु लोष्ट्रवत्।
आत्मवत् सर्वभूतेषु यः पश्यति स पंडितः॥

राजाह भवंतो महांतः पंडिताश्च तदत्रास्माकं यथाकार्यमुपदिश्यतां। मंत्री ब्रूते आः किमेवमुच्यते।

आधिव्याधिपरीतापाद् अद्य श्वो वा विनाशिने।
कोहि नाम शरीराय धर्मापेतं समाचरेत्॥
जलांतश्चंद्रचपलं जीवितं खलु देहिनां।
तथाविधमिति ज्ञात्वा शश्वत् कल्याणमाचरेत्॥
मृगतृष्णासमं वीक्ष्य संसारं क्षणभंगुरं।
सज्जनैः संगतं कुर्यात् धर्माय च सुखाय च॥

तन्मम संमतेन तदेव क्रियतां।

यतः। अश्वमेधसहस्राणि सत्यंच तुलया धृतं।
अश्वमेधसहस्रेभ्यः सत्यमेवातिरिच्यते॥

अतः सत्याभिधानदिव्यपुरः सरयोरप्यनयोर्भूपालयोः कांचनाभिधानसंधि र्विधीयतां। सर्वज्ञो ब्रूते एवमस्तु। ततो राजहंसेन राज्ञा वस्त्रालंकारोपहारैः समंत्री दूरदर्शी पूजितः प्रहृष्टमनाश्चक्रवाकं गृहीत्वा राज्ञो मयूरस्य सन्निधानं गतः। तत्र चित्रवर्णेन राज्ञा सर्वज्ञगृध्रवचनाद् बहुमानदानपुरःसरं संभाषितः तथाविधं संधिं स्वीकृत्य राजहंससमीपं प्रस्थापितश्च। दूरदर्शी ब्रूते, देव सिद्धं नः समीहितमिदानीं स्वस्थानमेव विंध्याचलं व्यावृत्य प्रतिगम्यतां। अथ सर्वे स्वस्थानं प्राप्य मनोभिलषितं फलं प्रापुरन्निति। विष्णुशर्मणोक्तम् अपरं किं कथयामि कथ्यतां? राजपुत्रा ऊचुस्तव प्रसादाद् राज्यव्यवहारांगं ज्ञातं। ततः सुखिनो भूता वयं। विष्णुशर्मोवाच यद्यप्येवं तथापि अपरमपीदमस्तु।

सन्धिः सर्वमहीभुजां विनिनियामस्तु प्रमोदः सदा,
संतः संतु निरापदः सुकृतिनां कीर्तिश्चिरं वर्द्धतां।
नीति र्वारविलासिनीव सततं वक्षःस्थले संस्थिता,
वक्त्रं चुंबतु मंत्रिणाम् अहरहो भूयात् महानुत्सवः॥

इति हितोपदेशे संधिर्नाम चतुर्थकथासंग्रहः समाप्तः॥

# ABBREVIATIONS EXPLAINED.

| | |
|---|---|
| *nom* | nominative case. |
| *gen.* | genitive case. |
| *acc.* | accusative case. |
| *ins.* | instrumental case. |
| *dat.* | dative case. |
| *abl.* | ablative case. |
| *loc.* | locative case. |
| *s.* | substantive. |
| *adj.* | adjective. |
| *pron.* | pronoun. |
| *du.* | dual. |
| *pl.* | plural. |
| *m.* | masculine. |
| *f.* | feminine. |
| *n.* | neuter. |
| *vb.* | verb. |
| *caus.* | causal verb. |
| *pres. or pr.* | present tense. |
| *pot.* | potential mode. |
| *imp.* | imperative. |
| *pret.* | preterite. |
| *fut.* | future. |
| *inf.* | infinitive. |
| *pass.* | passive. |
| *part.* | participle. |
| *agt.* | agent. |
| *prep.* | preposition. |
| *comp.* | compounded. |
| *ind. or indecl.* | indeclinable. |
| *abs.* | abstract. |
| *compar.* | comparative. |
| *superl.* | superlative. |

# VOCABULARY—SANSKRIT, ENGLISH, AND MURATHI.

## अ

Sanskrit. English. Murathi.

अ No, not. *A privative prefix.*
अंश *s. m.* A share, portion. अंशेन *ins. sing.*
अकथयत् *3rd per. sing. 1st pret. of vb.* कथ. Tell, relate.
अकरवं *1st. per. sing. 1st pret. of vb.* कृ. Do, make.
अकर्णधारा Without a helmsman. *nom. sing. f.*
अकस्मात् *ind.* Without a why, unexpectedly.
अकारण *s. n.* Absence of cause.
अकार्य *fut pass.part. of vb.* कृ, *with* अ. Not to be done.
अकार्यतम् *ind.* By doing what is not to be done.
अकाल *adj.* Unseasonable.—*s. m.* An ill season.
अकालकुसुम *s.* A flower budding out of season.
अकालसह *agt.* Unable to resist for long.
अकीर्तिकर *agt.* Shameful.
अकुत्सित *pass. part. of vb.* कुत्स Despise, *with* अ. Unreproached.
अकुल *adj.* Of no family, low.
अकुलीन *adj.* Of mean origin, low.
अकुशल *adj.* Unlucky.
अकृत्रिम *adj* Unfeigned, natural.
अकृपण *adj.* Generous, unmiserly.
अक्रियमाण *part.pr.pas. of vb.* कृ, *with* अ. Not beingdone.
अक्षत *pass. part. of vb.* क्षण kill, *with* अ. Unhurt.
अक्षम *adj.* Unable.
अक्षय *adj.* Imperishable.
अक्षयत्वात् *abl. sing. s. n.* यत्व. Indestructibility.
अक्षयलोक *s. m.* Heaven, the eternal world.
अक्षर *s. n.* A letter, or syllable.
अखिल *adj.* All, entire.
अगद *s. m.* A medicine.

निषेध, नाहीं.
वांटा, विभाग.
सांगितलें.
मीं केलें.
एकाएकीं.
निष्कारण.
न करावयाचें तें.
अवकाळ.
अवकाळी फुल.
न टिकणारा.
बदलौकिकाचें.
निंदारहित.
नीच.
नीचवंशांतला.
अकल्याण सूचक.
स्वभाविक.
उदार.
जें कांहीं न करावयाचें.
निरुपद्रव.
असमर्थ.
शाश्वत, नित्य.
नित्यत्वानें.
स्वर्ग.
अविनाशी.
सर्व.
औषध.

| Sanskrit. | English. | Muratha. |
|---|---|---|
| अगमत् | *3rd sing. 3rd pret. of vb.* गम go. अगम्यः Unattainable. | गेला. |
| अगर्व | *adj.* Modest, without pride. | नम्र. |
| अगाध | *adj.* Very deep, bottomless. | फारखोल. |
| अगुण | *s. m.* Absence of merit, defect. | अवगुण. |
| अगुणशील | *adj.* Worthless in disposition. | दुर्गुणाचा. |
| अगुप्त | *pass. part. of vb.* गुप conceal, *with* अ. Unguarded. | उघडा. |
| अगोचर | *s. n.* Non-concurrence, non-consciousness. | अज्ञाणअसें नाहीं. |
| अग्नि | *s. m.* Fire. | विस्तव. |
| अग्निसाक्षिकमर्याद् | *nom. s. m.* Who has received a vow of fidelity witnessed by the fire. | |
| अग्र | *s. n.* The front, point, or extremity.—*ind.* In presence of. | टोंक, पुढें. |
| अग्रतस् | *ind.* Before, at the head. | पुढें, समोर. |
| अघातयत् | *3rd sing. 1st pret. of* घाति (*caus. of vb.* घन slay.) He caused to be killed. | मारविलें. |
| अङ्क | *s. n.* The flank or lap. An embrace. | आंग, मांडी. |
| अङ्ग | *s. n.* A limb, the body; a branch; the mind. | अवयव, शरीर. |
| अङ्गवाक्पाणिमत् | *adj.* Having mind, speech, and hand. | |
| अङ्गस्पर्श | *s. m.* Bodily contact. | |
| अङ्गाङ्गि | *ind.* Body and body, *i. e.* co-operation. | |
| अङ्गार | *s. m.* Charcoal. | कोळसा. |
| अङ्गीकरोति | *3rd per. sing. pres.* He promises or assents. | पत्करतो. |
| अङ्घ्रि | The root of a tree. | पाळ, मूळ, पाय. |
| अचलः | *s. m.* A mountain. | डोंगर. |
| अचापल्यम् | *s. n.* Non-fickleness, firmness, consistency. | सुस्ती. |
| अचिन्तयम् | *1st per. sing. 1st pret. of vb.* चिन्त. Think, consider. | विचार केला. |
| अचिन्ता | *s. f.* Disregard, carelessness. | दुर्लक्ष. |
| अचिन्तितानि | *n. pl. n. pas. part.* अचिन्तित. Unthought of. | विचार न केलेलीं |
| अचिर | *adj.* Brief, momentary.—रेण *adv.* Without delay. | लौकर. |
| अचेतन | *adj.* Insensible, without reason. | जडपदार्थ. |
| अजः | *s. m.* A goat. | बोकड. |
| अजरामरवत् | *ind. from* अजर undying, अमर immortal, and वत् like. | शाश्वत. |
| अजा | *s. f.* A she-goat. | बकरी. |
| अजातमृतमूर्खाणां | *comp. s. pl. pr.* अजात unborn, मृत dead, and मूर्ख a fool. | |
| अजित | *pass. part. of. vb.* जि, with अ. Unconquered. | न जिंकलेला. |
| अजितेंद्रियः | *nom. m.* With unrestrained senses. | इंद्रियाधीन. |

| Sanskrit. English. | Murathi. |
| --- | --- |
| अजीर्णे *loc. sing. s. n* —र्ण. Indigestion. | |
| अज्ञ *adj.* Ignorant, foolish. | आडाणी. |
| अज्ञातकुलशीलस्य *gen. sing. m. comp.* of अज्ञात unknown, कुळ family, *and* शील disposition. | ज्याचें कुळ व चाल माहित नाहीं. |
| अज्ञातशीलः *n. sing. m.* Unknown as to character. | स्वभाव माहित नाहीं. |
| अज्ञात्वा *ind. pret. past. of. vb.* ज्ञा know, *with* अ. Not knowing. | न समजून. |
| अज्ञान *s. n.* Ignorance ; as *adj.* Ignorant. | |
| अज्ञानतस् *ind.* Ignorantly. | मूर्खत्वाने. |
| अञ्चल *s. m.* The end or border of a cloth or shawl. | कांठ ; पदर. |
| अञ्जन *s. n.* A collyrium, soorma, &c. | काजळ. |
| अञ्जनवत् *ind.* Like soorma. | |
| अञ्जलि *s. m.* The cavity of the palms in salutation. | ओंजळ. |
| अञ्जलिकर्मन् *s. n.* A making of submission ; civility. | |
| अटनम् *nom. sing. s. n.* A roving about. | फिरणें. |
| अटनी *s. f.* The notched end of the bow. | |
| अटवी *s. f.* A forest. | रान, वन. |
| अण्ड *s. n.* An egg ; a testicle. | आंडें, आंड. |
| अण्डजाः *n. pl. s. m.* Egg-born, *i. e.* fish or birds. | मासे, पक्षी इ० |
| अतएव *ind.* On this account. | म्हणूनच. |
| अतथ्य *adj.* Untrue, unreal. | खोटें. |
| अतन्द्रितः *adj. nom. sing. m.* Sprightly, not slothful. | चपल, हुशार, [सावध. |
| अतस् *ind.* From or than this, hence, hereafter. | यावरून इ० |
| अताडयत् *3rd sing. 1st pret. of vb.* तड. Strike, beat. | मारिलें. |
| अति *prep.* Much, very, beyond measure. | फार, पुष्काळ इ० |
| अतिक्रम *s. m.* A transgression.—क्रमतस् *adv.* | उल्लंघन. |
| अतिक्रान्त *pass. part. of vb.* क्रम, *with* अति. Passed beyond, extended. | सोडुन. |
| अतिजीर्णता *s. f.* Extreme old age. | पराकाष्ठेचें म्हातारपण |
| अतिथिः *s. m.* A guest. | पाहुणा. |
| अतिभार *s. m.* An exceeding great burden. | मोटें ओझें. |
| अतिरिच्यते *3rd sing. pres. of vb.* -रिच flow. Becomes excessive, increases in value. | अधिक होतें. |
| अतिवर्तते *3rd sing. pres. of vb.* -वृत be. Passes, elapses. | आहे. |
| अतिव्यय *s. m.* Prodigality, wasteful expense. | उधळेपणा. |
| अतिसक्तिमत् *adj.* Over-attached. | फारच नादावलेला. |
| अतिसञ्चयः *nom. sing. s. m.* An excessive hoard. | मोटा सांटा. |
| अतीतं *pass. part. of vb.* इ go. Passed, gone beyond. | गेलेला. |
| अतीत्य *ind. pret. part. of vb.* इ go. Having surpassed, got beyond. | मागें टाकून. |

| Sanskrit. | English. | Marathi. |
|---|---|---|
| अतीव | *ind.* Much, beyond measure. | पुष्काळच, फारच. |
| अतुष्टि | *s. f.* Displeasure, discontent. | असंतोष. |
| अत्ति | *3rd sing. pres. of vb.* अद् Eat. | खातो. |
| अत्यन्त | *ind.* Much, excessive, excessively. | फार. |
| अत्यय | *s. m.* A passing by, an escape. | |
| अत्यल्प | *adj.* Very little. | फार थोडें. |
| अत्याहित | *s. n.* A desperate or portentous deed. | शौर्य, धिटपणा. |
| अत्युत्कटैः | *ins. pl. n. adj.* Extreme, great. | फारच मोटा. |
| अत्र | *ind.* Here, in this world. | एथें. |
| अत्रान्तरे | *ind.* Meanwhile, thereupon. | इतक्यांत. |
| अत्रैव | *ind.* On this very spot. | एथेंच. |
| अथ | *p.* After, then, now, and, but. | नंतर. |
| अथवा | *ind.* Or, moreover, but. | किंवा. |
| अदत्त | *3rd per. sing. 1st pret. of vb.* दा give.—*Ind. pret. part.* त्वा. | न दिलेला. |
| अदर्शयत् | *3rd per. sing. 1st pret. caus. vb.* दर्शि. He made to appear. | दाखविलें. |
| अदीर्घसूत्रता | *s. f.* Despatch. | जलदी. |
| अदीर्घसूत्रम् | *acc. sing. m. adj.* Prompt. | |
| अदुर्गः | *nom. sing. m.* Without a fortress. | किल्याशिवाय. |
| अदुर्गविषयः | *n. s. m.* An unfortified country. | |
| अदृश्य | *fut. pass. part. of vb.* दृश् see, *with* अ. Invisible. | लपलेला. |
| अदृष्टः | *pass. part. of do.* Unseen. | न पाहिलेला. |
| अदृष्टकर्मा | *n. sing. m.* Not witnessed practice. | |
| अदृष्टपरसामर्थ्यः | *n. sing. m.* Not witnessed an enemy's power. | शत्रुशक्ति न जाणता. |
| अदृष्टपुरुषः | *n. sin. m.* A treaty where no mediator appears. | |
| अदृष्टविरहव्यथम् | *nom. sing. n. of comp.* अदृष्ट unseen, विरह separation, and व्यथा *s. f.* Pain. | |
| अदेशस्थ | *agt.* An absentee from his country. | दुसऱ्यादेशाचा. |
| अद्य | *ind.* To-day. | आज. |
| अद्ययावत् | *ind.* Till now, till to-day. | आजपर्यंत. |
| अद्यारभ्य | *ind.* From to-day. | आजपासुन. |
| अद्रव्ये | *loc. sin. s. n.* A thing of nought. | धनरहित. |
| अद्रि | *s. m.* A mountain. | पर्वत, पाहाड. |
| अधःकृत | *pass. part.* Thrown or put down. | खालीं केलेलें. |
| अधन | *adj.* Without means, poor. | गरीब. |
| अधमानाम् | *gen. pl. adj.* Low, vile. | दुष्टांचा, नीचांचा. |
| अधर्मतस् | *ind.* Unrighteously. | अधर्मानें. |
| अधस्त | *ind.* Down, downwards, beneath. | खालीं. |

| Sanskrit. | English. | Marathi. |
| --- | --- | --- |
| अधस्तात् | *ind.* Beneath, at the bottom. | खालीं, तळीं. |
| अधि | *prep.* Over, above, upon. | वर, वरतीं. |
| अधिक | *nom. s. m. adj.* Exceeding, more, superior. | श्रेष्ठ, ज्यास्ति. |
| अधिकम् | *ind.* Exceedingly. | फार, पुष्कळ. |
| अधिकार | *s. m.* Management, authority; an office or post. | देखरेख, हुद्दा. |
| अधिकाराढ्यः | *nom. s. m.* Invested with authority. | हुद्देदार. |
| अधिकारिन् | *s. m.* A superintendent or director. | अंमलदार. |
| अधिकृत | *pass. part. of vb.* कृ, *with* अधि. Set over, a director. | हुद्देदार. |
| अधिक्षिपसि | *2nd sing. pres. vb.* क्षिप cast, *with* अधि. Reproach, taunt. | निंदतोस. |
| अधिगच्छति | *3rd sing. pres. vb.* गम go, *with* अधि. Goes over, reads, acquires. | संपादितो, जातो. |
| अधितिष्ठति | *3rd sing. pres. vb.* स्था stand, *with* अधि. Governs. | उभा राहतो. |
| अधित्यका | *s. f.* Uplands. | पर्वतावरील जमीन. |
| अधिशयानः | *pres. part. vb.* शी lie down, *with* अधि. Inhabit. | निजतअसणारा. |
| अधिष्ठित | *pass. part. vb.* स्था stand, *with* अधि. Overlooked, presided over.—*indef. pass. part.* स्थितवत् He sat upon. | उभा राहिलेला. |
| अधीत | *pass.part. vb.* इ go, *with* अधि. Gone over, read, instructed. | पढीक. |
| अधीत्य | *ind. pret. part. vb.* इ go, *with* अधि. Having read. | शिकून. |
| अधीर | *adj.* Unsteadfast, timid. | भित्रा. |
| अधुना | *ind.* Now, at present. | आतां. |
| अधो, अधस् | *ind.* Down, always down, deep. | खालीं, खोल. |
| अध्ययन | *s. n.* Study of the sacred books. | शिकणें. |
| अध्यवसाय | *s. m.* Effort, perseverance. | श्रम. |
| अध्यवसायिनम् | *adj. nom. sin. n.* Undertaken, attempted. | |
| अध्रुवाणि | *n. & acc. pl. adj.* Uncertain. | अनिश्चित. |
| अन् | *ind. particle.* No, not, *prefixed in a privative, prohibitive, or diminutive sense.* | निषेध, नाहीं. |
| अनघः | *nom. sin. m. adj.* Sinless. | निष्पाप. |
| अनङ्ग | *s. m.* A name of Káma, whose body was burned to ashes by the eye of Shiva. | काम, रति. |
| अनतिक्रमणीय | *fut., pass. part. of vb.* क्रम step, *with* अति and अन्. Not to be avoided, or transgressed. | |

| Sanskrit. | English. | Marathi. |
|---|---|---|
| अनधिगतशास्त्राणाम् | *pl. m. comp.* अनधिगत unread, *and* शास्त्र *s. n.* A book or science. | अविद्वानांचा. |
| अनधिष्ठान | *s. n.* Want of superintendance. | आधारावांचुन. |
| अननुभूत | *pass. part. vb.* भू, be, *with prep.* अनु, *and* अन्. Unperceived. | अनुभवाचा नव्हे. |
| अननुष्ठान | *s. n.* Non-performance, neglect. | न करणें. |
| अनंतरम् | *ind.* Immediately, presently, afterwards. | नंतर, पश्चात्. |
| अनन्यप्रतिक्रियः | *nom. sin. m.* Unable to resist longer. | असाध्य. |
| अनपेक्षा | *s. f.* Carelessness, disregard. | उपेक्षा. |
| अनभिज्ञ | *adj.* Ignorant, unskilled. | मूर्ख. |
| अनभिमतम् | *acc. sin. pass. part. vb.* मत desire, with अभि *and* अन्. Not liked, unpleasant. | अनिष्ट. |
| अनभ्यास | *s. m.* Want of practice, neglect. | अभ्यास न करणें. |
| अनया | *instr. sin. f* इदम्. This. | हिणें. |
| अनर्घत्वात् | *abl. sin. s. n.* Absence of value, invaluableness, from *vb.* अर्घ cost. | अयोग्य म्हणुन, मोल नाहीं म्हणुन. |
| अनर्थकर | *agt.* Unprofitable. | अनर्थकारक. |
| अनर्थ | *s. m.* A misfortune, poverty, ruin. | नाश, दुर्दैव. |
| अनलः | *s. m.* Fire. | विस्तव. |
| अनवधान | *s. n.* Inattention, neglect. | अलक्ष्य. |
| अनवसर | *adj.* Unreasonable. | अकाल. |
| अनवस्थितचित्तत्व | *abs. s. n.* Unsteady mindedness. | गेंदीपणा. |
| अनागत | *pass. part. vb.* गम. Not arrived, future. | न आलेला. |
| अनागतविधाता | *s.* Future-fate ; name of a fish. | दैववादी. |
| अनाथ | *adj.* Without a friend—orphan. | |
| अनादर | *s. m.* Disrespect, a slight. | |
| अनायत्त | *adj.* Uncontrolled. | स्वतंत्र. |
| अनारंभ | *s. m.* Non-commencement. | आरंभाभाव. |
| अनारुह्य | *ind. pret. part. vb.* रुह mount, *with* आ *and* अन्. Not having surmounted. | न वसून. |
| अनार्य | *adj.* Disreputable. | हलका. |
| अनार्यता | *s. f.* Disreputable conduct. | नीचपणा. |
| अनालोच्य | *ind. pret. part. vb.* लोच see, *with* आ *and* अन्. Not having seen, or regarded. | न पाहतां. |
| अनाश्रयः | *nom. sin. m.* Destitute of asylum or defence. | |
| अनासादित | *pass. part. vb.* पद go, *with* आ *and* अन्. Not met or obtained. | न मिळालेला. |
| अनासादितविग्रहः | *nom. sin. m.* Unused to war. | |
| अनाहारेण | *ins. sin. s. n.* Fasting, starvation. | उपासानें. |
| अनाहूत | *pass. part. vb.* ह्वे call, *with* आ to, *and* अन्. Not summoned. | आगंतुक. |

| Sanskrit. | English. | Murathi. |
|---|---|---|
| अनित्य | *adj.* Transient, inconstant, uncertain. | अशाश्वत. |
| अनित्यता | *s. f.* Transient existence—*compared to a nurse or foster-mother.* | खचितपणा नाहीं. |
| अनियतात्मा | *nom. sin. m. comp.* अनियत unsubdued, *and* आत्मन् soul. | स्वछंदी. |
| अनियमः | *nom. sin. s. m.* Absence of restraint, unrestrained conduct. | कायदा नाहीं. |
| अनिष्टी | *adj.* Ill at ease.—वेदि Make to know. | दुःखी. |
| अनिवेद्य | *ind. pret. part. vb. with* नि *and* अ. Not having informed. | न कळवुन. |
| अनिलः | *s. m.* Wind. | वायु, वारा. |
| अनिश्चित्य | *ind. pret. part. vb.* चि gather, *with* निर *and* अ. Not having ascertained. | खचित न करून. |
| अनिष्ट | *pass. part. vb.* इष wish, *with* अन. Unwished, bad, unauspicious. | शत्रु अनिच्छित. |
| अनिष्ठुर | *adj.* Not insulting. | कोमल. |
| अनीक | *s. m.* or *n.*. An army. | फौज, लष्कर. |
| अनीति | *s. f.* Bad policy, imprudence. | गैरचाल. |
| अनीतिज्ञ | *agt.* Imprudent, silly. | मूर्ख. |
| अनु | *prep.* After, along with, according to. | बरोबर, सह. |
| अनुकम्पा | *s. f.* Compassion. | कृपा, दया. |
| अनुकीर्तनम् | *nom. sin. s. n.* A proclaiming abroad. | जाहीर करणे. |
| अनुक्त | *pass. part. vb.* वच speak, *with* अन्. Not spoken. | न बोललेलें. |
| अनुक्तक्लीववचनम् | *nom. sin. n. comp.* अनुक्त not spoken, क्लीव vain, *and* वचन *s. n.* a word. | |
| अनुक्षणम् | *ind.* Every instant. | क्षणोक्षणी. |
| अनुगच्छति | *3rd sin. pret. vb.* गम, *with* अनु. After, follows. | बरोबर जातो. |
| अनुगत | *pass. part. vb.* गम, *with* अनु. Following, a follower. | मिळाला. गेला. |
| अनुगतिक | *Nom. sin. m. adj.* Following, imitating. | दुसऱ्या प्रमाणें [करणारा. |
| अनुगृहीतः | *nom. sin. m. pass. part. vb.* ग्रह, *with* अनु. Favoured. | आवडता, प्रीतीचा. |
| अनुचर | *s. m.* A companion or follower. | चाकर. |
| अनुचितम् | *nom. sin. n. adj.* Improper, unfit. | अयोग्य. |
| अनुजग्मुः | *3rd pl. 2nd pret.* गम, *with* अनु. They followed. | बरोबर गेले. |
| अनुजानीहि | *2nd sin. imp. vb.* ज्ञा know, *with* अन. Permit. | परवानगी दे. |
| अनुजीविक | *s. m.* A follower. | पाठिमागुन जाणारा. |
| अनुजीविन् | *agt.* Following, or follower. | परतंत्र, पराधीन. |

Sanskrit. English. Marathi.

अनुत्तमम् *nom. or acc.sin.n.adj*. Best, having no better. फार चांगला.

अनुदित *pass.part.vb*. इ, *with* उत् *and* अन्. Not risen. न उगवलेलें.

अनुद्योगेन *ins. sin. s. m*. Absence of exertion. आळसानें.

अनुधावन् *nom. sin. m. pres. part. vb*. धाव run, *with* अनु. *Pursuing. पाठीमागें धावणारा.

अनुनय *s. m*. Civility, respect. नंम्रता.

अनुपकारिणे *dat. sin. m. agt*. Not assisting, helpless. उपयोगीं न पडणारा त्यास.

अनुपकुर्वाणा *pres. part. vb*. कृ, *with* उप *and* अनु. Not assisting. उपयोगीं न पडणारा.

अनुपपन्न *pass. part. vb*. पद् go, *with* उप *and* अन्. Unproved, unaccomplished. असिद्ध.

अनुपभुज्यमान *pres. pass. part. vb*. भुज eat, *with* उप *and* अन्. Not being enjoyed. न भोगलेला.

अनुपयुक्त *adj*. Unserviceable. निरुपयोगी.

अनुपालयन् *nom. sin. m. pres. part. vb*. पा, *with* अनु. Keeping, maintaining. पोसणारा.

अनुप्रविश्य *ind. pret. part. vb*. विश् enter, *with* प्र *and* अनु. Having entered. आंत जाऊन.

अनुप्राप्त *pass. part. vb*. आप obtain, *with* प्र *and* अनु. Reached, arrived, found. आलेला.

अनुबध्नन्ति *3rd per. pl. pres. vb*. बध्न Bind अनु. Follow, to be fixed to. बांधितात.

अनुभवन्ति *3rd pl. pres. vb*. भु, *with* अनु. Enjoy, experience. उपभोगितात.

अनुभूत *pass. part. of same*. Felt, ensued, ensuing. भोगलेलें.

अनुभूयते *3rd sin. pres. pass. of same*. Is felt, results. भोगलें जातें.

अनुमत *s. n*. Consent. रुकार.

अनुमरण *s. n*. Following in death, as opposed to सहगमन, the burning of a Hindu widow. सतीसरण.

अनुमानेन *ins. sin. s. n*. Inference, conclusion. तर्कानें.

अनुमेय *fut. pass. part. vb*. मा measure, *with* अनु. To be inferred or proved. तर्क करण्याजोगें.

अनुयाति *3rd sin. pres. vb*. या go, *with* अनु. Follows, attends. बरोबर जातो.

अनुरक्तः *nom. sin. m. pass. part. vb*. रञ्ज, *with* अनु. Loving, fond of. शोकी.

अनुरक्तिः *nom. sin. s. f*. Affection, attachment. प्रीति.

अनुरागः *nom. sin. s. m*. Attachment, love. प्रीति.

अनुरागवान् *nom. sin. m. adj*. -त्. Fond, in love with. प्रीतिकरणारा.

अनुरूप *s. n*. Conformity. सारखें, योग्य.

| Sanskrit. English. | Marathi. |
|---|---|
| अनुरोध *s. m.* Kindness, partiality. | पक्षपात. |
| अनुरोधन *s. n.* Compliance, good nature. | |
| अनुलिप्तः *nom. sin. m. pass. part. vb.* लिप् anoint, *with* अनु. Anointed, smeared. | माखलेलें घ्यानें. |
| अनुवर्तन *s. n.* Obedience. | मान्यता, मानणें. |
| अनुवर्तिन् *agt.* Following, obeying. | मानणारा. |
| अनुविधायिन् *agt.* Obedient, observant of rules. | नांमितल्या प्रमाणें करणारा. |
| अनुवृत्त *s. n.* Compliance. | पुढें आणलेला. |
| अनुवृत्ति *s. f.* Course, continuance. | पुढें जाणें-येणें. |
| अनुष्ठातव्य *fut. pass. part. vb.* ष्ठा, *with* अनु. To be followed, observed, done, conducted. | करावयाचें. |
| अनुष्ठानम् *nom. or acc. sin.* -ष्ठानम्. A doing or engaging in a thing, performance, course. | करणें. |
| अनुष्ठितम् *nom. sin. n. pres. part. vb.* ष्ठा, *with* अनु. Done, followed, observed, practiced, accomplished. | केलेलें. |
| अनुष्ठीयताम् *3rd sin. imp. pass. vb.* ष्ठा, *with* अनु. Let be minded, attended to, &c. &c. | करावें. |
| अनुष्ठेय *fut. pass. part. of same.* To be passed, &c. | करावयास योग्य. |
| अनुसन्धातव्य *fut. pass. part. vb.* धा hold, *with* सम् *and* अनु. To be heeded, minded, kept up. | चित्त देण्यास योग्य. |
| अनुसन्धान *s. n.* An arranging, close inspection. | चित्त लावणें. |
| अनुसन्धीयताम् *3rd sin. imp. pass. vb.* धा hold, *with* सम and अनु. Let be schemed, or adopted. | चित्त द्यावें. |
| अनुसंधेहि *2nd sin. imp. vb.* धा *with* अनु. Inspect, set in order, compose. | चित्त दे. |
| अनुसरण *s. n.* A following. | मागून जाणें. |
| अनुसारतस् *ind.* Fitting to the nature. | प्रमाणें, धोरणानें. |
| अनुसारिन् *agt.* Following. | धोरणानें चालणारा. |
| अनुहुङ्कुरुते *3rd sin. pres. vb.* कृ, *with imit. partic.* हुम् and अनु. Roars, grunts forth. | हूं करतो. |
| अनूप *adj.* Watery, wet. | ओलसर, दलदल. |
| अनृत *adj.* False. | खोटें. |
| अनृतम् *s. n.* Falsehood. | लबाडि. |
| अनेक *adj.* Many. | पुष्कळ. |
| अनेकचित्तमंत्रः *nom. sin. m.* One whose council are of more than one mind. | |
| अनेकधा *ind.* In many ways, many times over. | पुष्कळ तऱ्हेनें. |
| अनेकयुद्धविजयिन् *agt.* Victorious in many battles. | |
| अनेकरूप *adj.* Multiform. | पुष्कळ प्रकारचा. |

| Sanskrit. | English. | Marathi. |
|---|---|---|
| अनेकशस् | *ind.* In great numbers. | पुष्कळ. |
| अनेकसंशयोच्छेदि | *comp. of* अनेक, संशय doubts, *and* उच्छेदि cutting up. One who cuts away or clears up doubts. | |
| अनेकोपवासकृश | *comp. of* अनेक, उपवास, कृश. Weakened by much fasting. | |
| अनेन | *ins. sin. m.* or *n.* इदम्. By or with this, him, it. | यानें. |
| अन्तःसार | *s. m.* Inner treasure. | आंतीलतत्व. |
| अन्तक | *s. m.* Yama, the genius of Death. | नाशक, यम. |
| अन्तम् | *acc. sin.* End, term. | शेवट. |
| अन्तर् | *ind.* Inwardly. | आंत, आंतील. |
| अन्तरम् | *nom.* or *acc. sin. s. n.* Interval, distance, difference.—At the end of *a word* as देशान्तर. Another. | फरक, दुसरा. |
| अन्तरात्मा | *nom. sin. s. m.* The soul, the inmost feelings or faculties. | जीव. |
| अन्तरित | *pass. part. vb.* इ go, *with* अन्तर्. Withdrawn, screened. | ज्याच्या आड कांहीं आलें आहे असा, झांकलेलें. |
| अन्तरे | *loc. sin. s. n.* Interval.—*ind.* Among, between. | मध्यें. |
| अन्तर्गत | *pass. part. vb.* गम्, *with* अन्तर्. Gone within, inward, included in, inside. | आंतील. |
| अन्तर्दुष्ट | *pass. part. vb.* दुष् Be corrupt, *with* अन्तर्. Inwardly bad, vile. | मनाचा दुष्ट. |
| अन्तिकम् | *acc. s. n.* Vicinity, presence.—*ind.* Near. | जवळ. |
| अन्तिमः | *nom. sin. m. adj.* Last, final. | शेवटचा. |
| अन्धः | *nom. sin. m. adj.* Blind. | आंधळा. |
| अन्धवत् | *ind.* As blind. | आंधळ्यासारिखा. |
| अन्न | *s. n.* Food of any kind. | |
| अन्नदानम् | *acc. sin. n.* The gift of food. | जेवण देणें. |
| अन्य | *pron.* Other, another. | दुसरा. |
| अन्यच्च | *ind comp. of* अन्यत् *and* च and. Moreover. | पुनःदुसरें. |
| अन्यत् | *nom.* or *acc. sin. n.* Another, one, besides. | दुसरें. [सरे कडे. |
| अन्यतस् | *ind.* Elsewhere. | दुसऱ्याकडून, दु- |
| अन्यत्र | *ind.* Elsewhere, on the other hand. | अणखीकोठें. [ने. |
| अन्यथा | *ind.* Otherwise, else, contrarily, differently. | नाहींतर, वेगळ्यारीती- |
| अन्यदा | *ind.* At another time. | दुसऱ्यावेळीं. |
| अन्यमनस् | *adj.* Differently-minded, changeable. | चंचलमनाचा. |
| अन्यस्मात् | *abl. sin. m.* or *n. pron.* Other, another. | दुसऱ्यापासून. |
| अन्येनकेनचित् | *ind. sin. m. pron.* With any one else. | दुसराकोणी. |
| अन्योन्य | *adj.* Mutual, with each other. | परस्पर. |

| Sanskrit. | English. | Murathi. |
|---|---|---|
| अन्योन्यम् *ind.* Mutually. | | एक दुसऱ्यावरोबर. |
| अन्ववेक्षा *s. f.* Regard, attention. | | मान, लक्ष्य. |
| अन्विच्छेत् *3rd sin. pot. vb.* इष wish, *with* अनु. Should ask for. | | इच्छावें. |
| अन्वितः *nom. sin. m. pass. part. vb.* इ, *with* अनु. Connected with, accompanying, possessing. | | युक्त. |
| अन्विष्यति *3rd sin. pres. vb.* इष, *with* अनु. Seek. | | |
| अन्विष्यन् *pres. part. vb.* इष, *with* अनु. Seeking. | | सोधतो, पहातो. |
| अन्वेषण *s. n.* A search, or seeking. | | सोधणारा इ० |
| अन्वेषिन् *agt.* He who searches, searching. | | सोधणें इ० |
| अन्वेष्टुम् *inf. vb.* इष, *with* अनु. To seek. | | शोधणारा. |
| अप *prep.* Off, from, away; below, worse. | | सोधण्यास इ० |
| अपकर्त्तृ *agt.* Injurious, hostile, an enemy. | | |
| अपकर्ष *s. m.* Inferiority. | | शत्रु. |
| अपकार *s. m.* Injury, ill-service. | | |
| अपकारी *nom. sin. m. agt.* -कारिन्. Hostile, an enemy. | | उपद्रव, इजा. |
| अपकृत *pass. part. vb.* कृ *with* अप. Done wrong or offensively. | | शत्रू, वैरी. |
| अपगत *pass. part. vb.* गम, *with* अप. Gone off. | | |
| अपगम *s. m.* A going off, removal; death. | | गेला. |
| अपगा *s. f.* A current. | | मृत्यु. |
| अपचय *s. m.* Loss, privation, decline. | | नदी. |
| अपण्डितः *nom. sin. m. adj.* Unlearned, unwise. | | नुकसान. |
| अपत्यम् *nom. sin. s. n.* Offspring, or young of either sex. | | मूर्ख. |
| अपथ *s. n.* Want of a road, the wrong road. | | मूल. |
| अपथप्रपन्नाम् *acc. sin. f.* Got out of place, misplaced. | | वाईटमार्ग. [लेलीं. |
| अपथ्य *adj.* Not fit as food or drink. | | वाईटमार्गास लाग- |
| अपथ्यभुज् *agt.* Eating unwholesome things. | | अपकारी अन्न. |
| अपनीतः *nom. sin. m. pass. part. vb.* नी lead, *with* अप. Removed, driven away. | | अपकारी अन्न खाणारा. |
| अपमानम् *nom.* or *acc. sin. s. n* Disrespect, disgrace. | | घालविला तो. |
| अपयाति *3rd sin. pres. vb.* या go, *with* अप. Goes off, ceases. | | वे अदवी. |
| अपरः *nom. sin. pron.* Other, better. | | गमन करितो. |
| अपरञ्च *ind.* Again, moreover. | | दुसरा. |
| अपराद्धः *adj.* Guilty, faulty. | | अणखोही. |
| अपराधः *nom. sin. s. m.* Fault, offence. | | गुन्हेगार. |
| अपराधवृक्ष *s. m.* The tree of transgression. | | गुन्हा. |
| अपराधिन् *agt.* Transgressing, guilty. | | गुन्हा हाच वृक्ष. |
| अपरिच्छेद *s. m.* Want of judgment to distinguish false from true. | | अपराधि. |
| | | अनिश्चय. |

| Sanskrit. | English. | Murathi. |
|---|---|---|
| अपवाद् | *s. m.* Censure, unjust blame. | आरोप, आळ. |
| अपश्यन् | *past. pres. vb.* दृश् see, *with* अ. Not seeing. | न पाहात. |
| अपश्यम् | *1st sin. 1st. pret. vb.* दृश्. I saw. | मीं पाहिलें. |
| अपसर | *2nd sin. imp. vb.* सृ go, *with* अप. Move off, away. | दूर हो. |
| अपसार | *s. m.* Egress, a gate. | |
| अपसारित | *pass.part. causal vb.* सारि, *with* अप. Thrown away or aside. | दूर केलेला. |
| अपह | *agt. fr.* हन kill. Removing, destroying. | नाशक. |
| अपहरण | *agt.* Removing, carrying off, he or it that removes, &c. | दूरकरणें. |
| अपहर्तव्य | *fut. pass. part. vb.* हृ take, *with* अप. To be carried off, liable to be swept off. | घालविण्याजोगा. |
| अपहारकान् | *acc. pl. s. m* Robbers, spoilers. | चोरांला. |
| अपहारेण | *s. n.* A robbing or spoiling. | चोरणें, बुडावणें. |
| अपात्र | *adj.* Undeserving. | अयोग्य. |
| अपात्रभृत् | *agt.* Fostering the unworthy. | अयोग्य धरणारा. |
| अपायः | *nom. sin. s. m.* Destruction, death, loss, harm, peril. | नाश, उपद्रव. |
| अपास्य | *ind. pret. part. vb.* अस throw, *with* अप. Having quitted, or left alone. | टाकून. |
| अपि | *ind.* Although, even, also, surely.—*Subjoined to* किम् or its derivatives, it confers an undeterminate sense. | जरीं, ही. |
| अपीडयन् | *nom. sin. m. pres. part. vb.* पीड pain, *with* अ. Without distressing or paining. | निरुपद्रवी. |
| अपीत्वा | *ind. pret. part. vb.* पा *or* पी drink, *with* अ. Not having drank, without drinking. | न पीऊन. |
| अपुत्रस्य | *gen. sin. s. m.* A childless man. | ज्याला मुलगा नाहीं. |
| अपूर्व्व | *adj.* Unprecedented, excellent, extraordinary. | |
| अपृच्छत् | *3rd sin. 1st pret. vb.* प्रच्छ ask. Asked. | विचारिलें. |
| अपृष्टः | *nom. sin. m. pass. part. vb.* प्रच्छ ask, *with* अ. Unasked, unquestioned. | ज्यास विचारलें नाहीं तो. |
| अपेक्षते | *3rd sin. pres. vb.* ईक्ष see, *with* अप Wait for, expect, see, consider. | वाट पाहातो, गरज धरतो. |
| अपेयाः | *nom. pl. f. fut. pass. part. vb.* पा drink, *with* अ. Undrinkable. | पिण्याला योग्य नाहीं ते. |
| अपैति | *3rd sin. pres. vb.* इ, *with* अप. Departs. | निघून जातो. |
| अप्रगल्भः | *adj.* Modest, shy. | मुखे, गैरझगार. |
| अप्रतिहत | *pass. part. vb.* हन, *with* प्रति *and* अ. Uninjured, unaffected. | ज्यास धक्का बसला नाहीं तो. |
| अप्रतीकार | *nom. sin. s. n.* Non-retaliation. | असाध्य. |

| Sanskrit. | English. | Murathi. |
|---|---|---|
| अप्रधान | *adj.* Secondary, subordinate. | साधारण. |
| अप्रधानता | *abl. s. f.* Subordinate rank. | लहानपणा. |
| अप्रवर्त्तनम् | *nom. sin. s. n.* No need of enterprise, non-observance of advice. | प्रवृत्ति न होणें. |
| अप्रसाद् | *s. m.* Disapprobation. | अवकृपा. |
| अप्राप्त | *pass. part. vb.* आप obtain, *with* प्र *and* अ. Unobtained. | न मिळालेलें. |
| अप्राप्तकाल | *adj.* Unseasonable. | ज्याची वेळ आली [नाहीं तें. |
| अप्राप्तावसर | *adj.* Ill-timed, unseasonable. | ज्याचा प्रसंग आला नाहीं तें. |
| अप्राप्य | *ind. pret. part. vb.* आप, *with* अ *and* प्र. Not having found. | न मिळण्या सारिखें. |
| अप्राप्यम् | *acc. sin. n. pret. pass. part. same vb.* Not to be found or attained. | जो वांझ किंवा निष्फल नव्हे तो. |
| अप्रियः | *nom. sin. m. adj.* Disliked, displeasing, unwelcome. | नावडा. |
| अप्रियम् | *ind.* Unkindly. | कडु. |
| अवध्य | *fut. pass. part. vb.* वध kill, *with* अ. Not to be killed, holy. | न मारायाचा. |
| अवध्यभाव | *s. comp.* Sacredness of character. | |
| अवन्ध्य | *adj.* Not barren, productive. | कुटुंबवत्सल. |
| अबालिश | *adj.* Not ignorant or childish. | प्रौढ, जाणता. |
| अबुद्धिमत् | *adj.* Stupid, senseless. | बुद्धिहीन. |
| अबुध | *adj.* Stupid, foolish. | मूर्ख. |
| अब्रवीत् | *3rd. sin. 1st pret. vb.* ब्रू. Say, speak. | बोलला. |
| अभज्यमान | *pres. pass. part. vb.* भञ्ज break, *with* अ. Accompanied, attended, associated. | सबंध. |
| अभयप्रदान | *s. n.* The gift of freedom from fear. | खाची देणें. |
| अभयवाच् | *s. f.* An assurance of safety. | अभय वचन. |
| अभवत् | *3rd sin. 1st pret. vb.* भू. Be, become. | झाला. |
| अभावः | *nom. sin. s. m.* Non-existence, absence, want. | नसणें. |
| अभाविन् | *agt.* Not future, not to be. | पुढील नव्हे. |
| अभि | *prep.* Before, over, against, in presence of; much, very. | पुढें. |
| अभिगमन | *s. n.* An approaching. | जवळ येणें. |
| अभिघातयेत् | *3rd sin. pret. caus. vb.* घाति slay, *with* अभि. | मारावें. |
| अभिजात | *pass. part. vb.* जन, *with* अभि. Well-born, wise. | उत्तमवंशाचा. |
| अभिजातता | *s. f.* High birth. | |
| अभिज्ञान | *acc. pl. m. agt.* Knowing, skilful. | जाणत्यांस. |
| अभिधा | *s. f.* An appellation or title. | नाम, नांव. |
| अभिधान | *s. n.* A name, *used frequently in compounds.* | नांव. |

| Sanskrit. | English. | Murathi. |
| --- | --- | --- |
| अभिधाय *ind. pret. part. vb.* धा hold, *with* अभि. | Having said, or called, or held. | बोलून, म्हणून. |
| अभिनन्दति *3rd sin. pres. vb.* णदि. Rejoice, अभि. | Likes, heeds, regards, wishes for. | मान्य करतो, चाहातो. |
| अभिनव *adj.* | New, young. | नवा, तरुण. |
| अभिनवयौवन | Youthful. | तरुण. |
| अभिप्रेत *pass. part. vb.* इ go, *with* प्र *and* अभि. | Meant, wished, intended. | इष्ट. |
| अभिप्लुत *pass.part.vb.* प्लु swim, *with* अभि. | Overwhelmed. | तरलेला. |
| अभिभव *s. m.* | Defeat, disgrace, subjugation. | पराजय. |
| अभिमतः *nom. sin. m. pass. part. vb.* मन desire, *with* अभि. | Wished, accepted, approved, admitted. | इष्ट. |
| अभिमुख *adj.* | Present. | समोरचा, हजर, [विद्यमान. |
| अभिमुखम् *ind.* | Towards, facing. | कडे, जवळ. |
| अभियुक्त *pass. part. vb.* युज join, *with* अभि. | Attacked, defeated. | जुळलेला. |
| अभियोक्तृ *agt.* | An assailant, claimant, one stronger. | फिर्यादी. |
| अभियोज्य *nom. sin. n. fut. pass. part. vb.* युज, *with* अभि. | Assailable. | जुळवून. |
| अभिरुचि *s. f.* | Delight, taste, ambition. | संतोष, रुचि. |
| अभिलषति *3rd pres. sin. vb.* लष like, *with* अभि. | Long for. | इच्छितो. |
| अभिलषितम् *s. n.* | Wish, will, pleasure. | इच्छित. |
| अभिलाष *s. m.* | Lust, desire. | इच्छा, लोभ. |
| अभिवन्दे *1st sin. pres. vb.* वद्, *with* अभि. | Salute. | नमस्कार करितों. |
| अभिवाञ्छन्ति *3d pl. pres. vb.* वाञ्छ, *with* अभि. | Long after. | इच्छितात. |
| अभिवादयामि *1st sin. pres. vb.* वद्, *with* अभि. | Salute, or address respectfully. | नमतों. |
| अभिषिक्त *pass. part. vb.* षिच, *with* अभि. | Sprinkled, anointed, inaugurated. | शिंपलेला. |
| अभिषेक *s. m.* | A bathing, sprinkling, inauguration. | मंगलस्नान. |
| अभिषेक्तुम् *inf. vb.* षिच sprinkle, *with* अभि. | To anoint, inaugurate. | शिंपण्यासाठीं. |
| अभिषेणयेत् *3rd. sin. pret.* | He should march out against. | स्वारीकरो. |
| अभिहित *pass. part. vb.* धा hold, *with* अभि. | Said, uttered, addressed, prompted to say. | सांगीतलेलें. |
| अभीतवत् *ind.* | As not afraid. | धिटाचारखे. |
| अभीष्टाः *nom. pl. m. pass. part. vb.* इष, *with* अभि. | Desired, cherished. | प्रीतीचे. |

# VOCABULARY.

| Sanskrit. | English. | Murathi. |
| --- | --- | --- |
| अभूयिष्ठ | *superl.* बहु.—*adj.* many, *with* अ. Not very numerous. | थोडें. |
| अभेद | *s. m.* Compactness, close array. | ऐक्य. |
| अभ्यञ्जन | *s. n.* Smearing with oil. | काजळ लावणें. |
| अभ्यन्तरम् | *acc. sin. s. n.* Inner part, included space. | आंतील भाग. |
| अभ्यर्च्यते | *3rd. sin. pres. pass. vb.* अर्च honour, *with* अभि. Is honoured. | पूजा झालेला. |
| अभ्यागत | *s. m.* A guest or visitor. | पाहुणा. |
| अभ्यास | *s. m.* Practice, repeated exercise or performance. | घोकण. |
| अभ्युदये | *loc. sin. s. m.* Increase, prosperity. | उर्जितकाळीं. |
| अभ्युपैति | *3rd. sin. pres. vb.* इ, *with* उप *and* अभि. Goes near, agrees, promises, is faithful to, submits. | जवळ जातो. |
| अभ्र | *s. m.* A cloud. | आभाळ. |
| अमर्ष | *s. m.* Impatience, anger. | राग. |
| अमात्य | *s. m.* A minister. | दिवाण. |
| अमाननम् | *s. n.* Disrespect, disobedience. | अपमान. |
| अमाया | *s. f.* Sincerity, the absence of deceit. | खरें. |
| अमी | *nom. pl. m. of* अदस्. This. | हे. |
| अमृतम् | *s. n.* Nectar, the drink of the gods. | |
| अम्बा | *s. f.* A mother. | देवी, आई. |
| अम्बु | *s. n.* Water. | पाणी. |
| अम्भस् | *s. n.* Water. | पाणी. |
| अम्भस्स्थः | *nom. m. agt.* Standing in water. | पाण्यांत उभा राहिलेला. |
| अयत | *pass. part. vb.* यम restrain, *with* अ. Unrestrained. | स्वच्छंद. |
| अयत्नेन | *ins. sin. s. m.* Absence of effort, ease. | श्रमावांचून. |
| अयम् | *nom. sin. m. of* इदम्. This. | हा. |
| अयुक्तम् | *acc.* or *nom. sin. m. pass. part. vb.* युज join, *with* अ. Not united, improper. | वाईट. |
| अयुद्ध | *s. n.* Absence of war, peace. | तह, सल्ला. |
| अयोग्य | *adj.* Unserviceable. | वाईट. |
| अयोध्या | *s. f.* The modern *Oude, Ayodhyá.* | |
| अरक्षित | *pass. part. vb.* रक्ष guard, *with* अ. Undefended. | |
| अरण्यराज्य | *s. n.* The lordship of the forest. | रानचें राज्य. |
| अरण्यवत् | *ind.* Like a wilderness. | रान-वनासारिखें. |
| अरण्यवासिन् | *agt.* Dwelling in the forest. | वनवासी. |
| अरण्यात् | *abl. sin. s. n.* A forest. | रान-वनापासून. |
| अरण्यानी | *nom. sin. s. f.* A large forest. | मोठें रान. |
| अराति | *s. m.* An enemy. | दुस्मान, शत्रू. |
| अरि | *s. m.* An enemy. | शत्रू. |
| अरिनन्दन | *agt.* Gratifying an enemy. | शत्रूस आनंद देणारा. |

| Sanskrit. | English. | Marathi. |
|---|---|---|
| अरे *interj.* Ho, ho! | | |
| अरोग: *acc. sin. s. m.* Health. | | निरोग. |
| अरोगिता. *nom. sin. s. f.* Exemption from sickness. | | आरोग्य. |
| अरोगिन् *adj.* Exempt from sickness. | | निरोगी. |
| अर्क *s. m.* The sun. | | सूर्य. |
| अर्गल *s. n.* A wooden door pin, a lock. | | कोल, किल्ली. |
| अर्चयन्ति. *3rd. pl. pres. vb.* अर्च. Honour, respect. | | मान देतो. |
| अर्ज्जन *s. n.* A gaining of wealth. | | मिळविणें. |
| अर्ज्जित *pass. part. vb.* अर्ज्ज acquire. Gained, earned. | | मिळविलेलें. |
| अर्णवस्य *gen. sin. s. n.* The ocean. | | समुद्राचा. |
| अर्थ: *s. m.* Advantage, profit, wealth, cause, object, thing, meaning. | | कारण, लाभ. |
| अर्थ *s. m.* A thing, wealth, meaning, intention; for, on account of (as a substitute for the dative). | | संपत्ति, पैसा. |
| अर्थकरी *nom. sin. f. comp.* अर्थ *and* कर making. Advantageous. | | लाभदायक. |
| अर्थतत्व *s. n.* The true case, or fact. | | खरी गोष्ट. |
| अर्थतस् *ind.* Really, truly. | | खरेपणाने. |
| अर्थदूषण *s. n.* An unjust taking or withholding of goods. | | |
| अर्थनाश *s. m.* Loss of property. | | द्रव्याचें नुकसान. |
| अर्थपर *adj.* Intent upon wealth, niggardly. | | धनलोभी, कृपण. |
| अर्थलाभे *loc. sin. s. m. comp.* अर्थ *and* लाभ. Acquisition of wealth. | | द्रव्यप्राप्तीत: |
| अर्थवताम् *gen. pl. m. adj.* Wealthy. | | मातब्बरांचा. |
| अर्थवृद्धि: *nom. sin. s. f.* Increase of wealth. | | द्रव्यवृधि: |
| अर्थसारेण *ins. sin. s. m.* By, or on account of wealth. | | रकमेने. |
| अर्थागम *comp. s. m.* Incoming of wealth. | | पैसा मिळणें. |
| अर्थिता *nom. sin. s. f.* The state of a beggar, begging. | | मागणें, याचना. |
| अर्थी *nom. sin. m. agt.* Asking, a beggar or suppliant. | | मागणारा, याचक. |
| अर्थे *loc. sin. s. m.* Wealth &c.—*ind.* For, on account of, against. | | कासांत. |
| अर्थोपाया *ins. sin. s. m.* By comfort of wealth. | | पैशाच्या उवेनें. |
| अर्दित *pass. part. vb.* अर्द. Pained, injured. | | दुःखित. |
| अर्द्ध *s. n.* A half. | | निंमे. |
| अर्द्धकोटी *s. f.* Half a crore. | | पन्नास लक्ष. |
| अर्द्धकोष *s. m.* Half one's treasure. | | |
| अर्द्धरात्र *s. n.* Midnight. | | मध्यरात्र. |
| अर्पित *pass. part. caus. vb.* अर्पि, *from* ऋ go. Placed in, or applied. | | पुढें ठेवलेलें. |
| अर्व्बुद *s. m.* or *n.* A hundred millions. | | दाहाकोटी. |

